संस्कृतप्रचारपुस्तकमाला सं० ४०

# सुरभारती-सन्देशः

[संस्कृतशिक्षापद्धतेः संस्कृतविद्वत्समाजस्य तथा संस्कृतविद्यार्थिवर्गस्य च कतिपयैरवाञ्छनीयैरहितकरैश्च स्वरूपैः भृशं परितप्यमानायाः सुरभारत्यास्तान् प्रति निजदुःखनिवेदनं तथा तेषां सर्वोत्कृष्टस्वरूपनिर्माणाय समयोचितकर्तव्यनिरूपणञ्च]



सन्देशाहृतः—
श्री वासुदेव द्विवेदी, वेदशास्त्री, साहित्याचार्यः
( संस्कृत प्रचार पुस्तकमाला—सम्पादकः ).

सार्वभौम संस्कृत प्रचार कार्यालयः
वा रा ण सी

પરમશ્રદ્ધેયસુહૃદ્વરાણાં
શ્રી પં. સત્યનારાયણમિશ્ર
મહોદયાનાં સેવાયાં
સાદર સમર્પણમ્.
— વા. દ્વેકોર.
૨૨-૯-૬૪

# सुरभारती-सन्देशः




सन्देशवाहकः—
श्री वासुदेव द्विवेदी, वेदशास्त्री, साहित्याचार्यः
( संस्कृत प्रचार पुस्तकमाला—सम्पादकः )

सार्वभौम संस्कृत प्रचार कार्यालयः
वा रा ण सी

दिव्योऽयं सुरभारत्या सन्देशः प्रेषितो हितः ।
अपि कार्यशतं हित्वाऽध्येयः श्रेयोऽभिलाषिभिः ॥
इयं संस्कृतशिक्षाया गीता संस्कृतसेवकैः ।
समस्तैः श्रद्धया भक्त्या पठनीया मुहुर्मुहुः ॥
सर्वसिद्धिकरी चैषा दुर्गासप्तशती यथा ।
आत्मनः संस्कृतस्यापि जपनीया हितैषिभिः ॥
इदं कटुकमप्युग्रं भैषज्यं लाभकारकम् ।
निमील्य नयने पेयं नूनं सर्वैर्मनीषिभिः ॥
आद्योपान्तमिमं ग्रन्थं पठिष्यति य आत्मवान् ।
स संस्कृतं संस्कृतज्ञान् आत्मानञ्चोद्धरिष्यति ॥

# विषय-सूची

## संस्कृतप्रचारविषयकं द्वितीयं प्रकरणम्



## अध्ययनाध्यापनविषयकं तृतीयं प्रकरणम्

## देशसमाजसेवाविषयकं चतुर्थं प्रकरणम्

———

# सन्देशवाहकस्य आत्मनिवेदनम्

शास्त्रान्तरेषु कुशलेष्वपि कालयोगात्
दोषानवेक्ष्य तदपायकराननेकान् ।
वाणी विषण्णहृदयाऽपि हिताय तेषां
कल्याणिनी करुणयाऽकुलिता बभूव ॥१॥

नो यद्यपीह गुणदोषमये प्रपञ्चे
सम्भाव्यते क्वचिदशेष—गुणावतारः ।
लोके तथापि विदुषामिह दोषलेशोऽ
प्यालोकितो वितनुते विपुलं विषादम् ॥२॥

प्रायो जनाश्च सुगुणानपहाय पुंसां
दोपस्य लेशमपि भूरि विशेषयन्ति !
तस्मादवेक्ष्य मनसा स्वयमात्मदोषान्
तेषां स्वतोऽपनयने सुधियाऽवधेयम् ॥३॥

कस्यापि कोऽपि हितकृन्न जनस्य जन्तुः
स्वात्मैव बन्धुरखिलस्य जनस्य लोके ।
आशामुदस्य मनुजेन ततः परेषां
यत्नः स्वयं निजसमुद्धरणे विधेयः ॥४॥

इत्थं विचिन्त्य बहुधा सुधियामशेष—
दोषक्षयाय पुनरभ्युदयाय चैषाम् ।
देवी दयार्द्रहृदया सविधेऽथ तेषां
सन्देशदानमुचितं किल निश्चिकाय ॥५॥

यद्यप्रियं भवतु वा कटु वा नितान्तं
वक्तव्यमेव समये सुधिया हितं यत् ।
नूनं व्रणेषु परिणामहितावहापि
शल्यक्रिया भवति किं सुखदा कदाऽपि ॥६॥

को वा परस्य निखिलेन निरीक्षितेन
छिद्रेण लाभ इति नैव बुधेन वाच्यम् ।
छिद्रं परस्य यदि तस्य विघातकं स्यात्
संसूच्यमेव सुजनेन हिताय तूर्णम् ॥७॥

कश्चित् परोऽयमिति वा कथमभ्युपेयं
शिक्षा यदीह "वसुधैव कुटुम्बकं" नः ।
आसेतुशीतगिरिवर्तिबुधान् समस्ता—
नात्मानमेव ननु सत्यमहन्तु जाने ॥८॥

इत्थं विनिश्चयवती बहुदुःखिनी सा
मामेव वाहकपदे विनियोजयन्ती ।
स्वप्ने प्रकाशित - मनोगत - सर्वभावा
सन्देशजातमिदमश्रुमुखी बभाषे ॥९॥

उल्लङ्घ्यतामथ कथन्नु मया विशेषो
वाग्देवताकथित एष निदेश आद्यः ।
उच्येत चेदथ यथाकथितं बुधेभ्यो
नूनं कदाचन रुषाऽरुणलोचनाः स्युः ॥१०॥

सर्वं विषह्य विहितेऽपि खलु प्रयत्ने
दास्यन्ति तत्र किमु वा सुधियोऽवधानम् ।
केचित् कठोरहठवादपरा अमीषां
प्रायः परस्य वचनं न समाद्रियन्ते ॥११॥

आशङ्कयाऽहमनया चलितोऽपि चेतः
स्वस्थं विधाय बहुधा विमृशन्नशेषम् ।
मत्वा हितानि सुधियामथ शारदाया
आदेशपालननिविष्टमना अभूवम् ॥१२॥

सेयं श्रीसुरभारतीसमुदिता सन्देशवाणी मया
कल्याणाय मनीषिणामनुपदं पद्यैरुपस्थापिता ।
मन्ये पण्डितबान्धवाः सुमतयो विज्ञाय लाभं निजं
सन्देशेषु भवेयुरेषु नितरां नूनं निबद्धादराः ॥१[illegible]॥

सन्देशेषु पुनर्मयाऽपि कतिचिद् भावा निजा योजिताः
पुष्ट्यै स्वानुभवेन चेद्, अनुचितं ज्ञेयं न विद्वज्जनैः ।
यः सन्देशितुराशयं सुविपुलैर्वाचां विलासैर्निजैः
सुस्फीतं कुरुते स एव कुशलः सन्देशवाहो मतः ॥१४॥
देशेषूत्तरदक्षिणेषु सुचिरादाहिण्डता सर्वतो
विद्वद्भिः सह सङ्गतीर्विदधता विद्यालयान् पश्यता ।
यज्ज्ञातं खलु साध्वसाधु सकलं वृत्तं तदावेदितं
सत्यं संस्कृत-संस्कृतज्ञविबुधश्रेयोधिया केवलम् ॥१५॥
दूतः कश्चन विप्रिया अपि गिरः सन्देशभूता वदन्
नीतिज्ञैरनुमन्यते न च पुनर्दुर्वाच्यतां गच्छति ।
तन्मन्येऽयमपि प्रसन्नमनसा सन्देशहारी जनो
विद्वद्भिः सदसद्विवेककुशलैर्मर्षिष्यते सर्वथा ॥१६॥
प्रार्थ्यन्ते च पुनर्निबन्धमखिलं दृष्ट्वा धिया स्वस्थया
स्वाभिप्रायनिवेदनाय सुधियः सर्वे मया सादरम् ।
येनायं परिमार्जितः प्रगुणितो भूयात् सदा संस्कृत-
क्षेत्रे निर्मलमार्गदर्शकमहादीपप्रकाशोपमः ॥१७॥

भ्रामं भ्रामं पुनरहमितः शीघ्रमेवाविरामं
ग्रामे ग्रामे सकलविदुषां पादमूलोपविष्टः ।
वाणीमेतामनुदिनमनुप्राणिनीं श्रावयिष्ये
विद्वद्वर्गो मुहुरपि यथा वन्द्यतां यातु लोके ॥१८॥
मन्ये सर्वे स्वपरगणना-मान-मात्सर्यदोषै-
रस्पृष्टान्तःकरणसुभगाः सद्गुणग्राहिणश्च ।
विद्वद्वर्याः सरस-करुणा-स्नेह-सौहार्द - पूरै-
र्दूरे दूरेऽप्यसमसमये मत्सहाया भवेयुः ॥१९॥

———

# माङ्गलिकसूक्तयः

वयं राष्ट्रे जागृयाम पुरोहिताः ।

—यजुर्वेद ६।२३

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

—कठोपनिषद्--शान्तिपाठः

सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सं जानाना उपासते ॥

—ऋग्वेदः १०।१६१।२

ब्राह्मण्यं बहुभिरवाप्यते तपोभि—
स्तल्लब्ध्वा न रतिपरेण हेलनीयम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः
क्षेमार्थी कुशलपरः सदा यतस्व ॥

—महामुनिर्वेदव्यासः

परस्परविरोधिन्योरेकसंश्रयदुर्लभम् ।
सङ्गतं श्रीसरस्वत्योर्भूयादुद्भूतये सताम् ॥

—महाकविः कालिदासः

अङ्गणवेदिर्वसुधा
कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः
कृतप्रतिज्ञस्य वीरस्य ॥

—महाकविर्बाणभट्टः

यादृशः शङ्कराचार्यः चाणक्यः सायणस्तथा ।
तिलको मालवीयश्च तादृशाः सन्तु पण्डिताः ॥

—सन्देशवाहकः

---

# सुरभारती-सन्देशः

## तत्रादौ सन्देशदानाय सुरभारत्या उपक्रमः सन्देश-प्रयोजन-निरूपणं च ।

अयि भोः पण्डिता वृद्धा नवीनाः शास्त्रिणस्तथा ।
विद्यालय-महाविद्यालयानां शिक्षकास्तथा ॥१॥
शाब्दिकास्तार्किकाश्चैव साहित्याध्यापकास्तथा ।
ज्योतिर्विदो वैदिकाश्च वैद्याः पौराणिका अपि ॥२॥
अथ चाङ्गलकालेज-प्राध्यापकधुरन्धराः ।
विश्वविद्यालयानां च विभागपतयस्तथा ॥३॥
औत्तरा दाक्षिणात्याश्च पूर्वपश्चिमजाः पुनः ।
स्थलजाः पर्वतीयाश्च सर्वे सम्मान्यपण्डिताः ॥४॥
अहं चिरपरिज्ञाता भवतां सुरभारती ।
विनिवेद्यं किमप्यद्य निवेदयितुमुत्सहे ॥५॥
तद्दत्त्वा समयं कश्चिद् अवधान-पुरस्सरम् ।
आकर्णयेयुर्भवन्तश्चेत् महतीयं कृपा भवेत् ॥६॥
अहं बहुविधैः कष्टैः पीड्यमानाऽधुना भृशम् ।
चिन्तया च विशुष्यन्ती क्षयं यामि दिने दिने ॥७॥
न च तद् वातजं कष्टं कफजं पित्तजं न वा ।
न वा दैवकृतं तत्र भवन्तः खलु कारणम् ॥८॥
भवतामेव दोषा हि शोषणे मम कारणम् ।
यन्निवेदयितुं दुःखादयमद्य ममोद्यमः ॥९॥

सन्ति यद्यपि भूयांसस्तादृशा अपि पण्डिताः ।
अनवद्यैर्गुणैर्येषां प्रसीदामि निरन्तरम् ॥१०॥

तेषामगाधं पाण्डित्यं चरित्रं चापि निर्मलम् ।
व्यवहारो मनोहारी सर्वमेव सुखावहम् ॥११॥

तथाप्यधिकसंख्येषु कतिचिद्दोषदर्शनात् ।※
नितान्तं दुःखिता भूत्वा इदमद्य निवेदये ॥१२॥

न चेदमपमानाय निन्दायै दूषणाय वा ।
वचनं मम मन्यध्वं मनागपि मनीषिणः ॥१३॥

इदं तु कथ्यते सर्वं भृशं पीडितया मया ।
वस्तुतो भवतामेव समुद्धाराय केवलम् ॥१४॥

भवतामेव भूत्यर्थं भवतामेव वृद्धये ।
भवतामेव मानार्थं निखिलोऽयं मम श्रमः ॥१५॥

भवन्तः सुखिनः सन्तु भवन्तः सन्तु पूजिताः ।
तथा यशस्विनः सन्तु इत्येको मे मनोरथः ॥१६॥

तस्माद् यदप्रियं किञ्चिन्मुखान्मे निर्गतं भवेत् ।
प्रीत्या तदपि सोढव्यं कटुकं भेषजं यथा ॥१७॥

यतो हि—

यो दोषं प्रकटीकुर्यात् त्रुटिं वा परिदर्शयेत् ।
स च मित्रं रिपुर्वापि सम्मान्यो भूतिमिच्छता ॥१८॥

इयं च परमा विद्या अयं च परमो गुणः ।
इदमभ्युन्नतेर्मूलं यत् स्वदोषानुचिन्तनम् ॥१९॥

अणीयांसमपि स्वीयं दोषं ज्ञात्वा तु ये जनाः ।
प्रयतन्ते तमुद्धर्तुं तेषामभ्युदयो ध्रुवः ॥२०॥

---

※ अस्मिन् विषये म० म० श्री रामावतार शर्म्मणां, श्री मदाचा[र्य] शालिग्राम शास्त्रिणां तथा म० म० श्री गिरिधरशर्मचतुर्वेदि महोदयान[ा]मपि लेखा अवलोकनीयाः ।

अथ च—

*अद्य ये तु श्रमेऽशक्ता वर्षीयांसो मनीषिणः ।*
*कृतकृत्या निवृत्ताश्च न तान् किञ्चिदहं ब्रुवे ॥२१॥*
*परं ये पण्डिताः प्रौढाः शक्ताः सर्वेषु कर्मसु ।*
*यौवनं वा नवं येषाम् उद्दामोत्साहसंयुतम् ॥२२॥*
*तैः कथं खलु निश्चेष्टैरलसैर्लक्ष्यवर्जितैः ।*
उपहासास्पदैर्भूत्वा स्थेयं कापुरुषैरिव ? ॥२३॥
*अतः स्वीयसमाजस्य आत्मनश्च हितैषिभिः ।*
*पण्डितैर्निखिलैरेताः श्रोतव्यास्त्रुटयोऽव्ययम् ॥२४॥*
*श्रुत्वा सर्वमिदं धैर्याद् अवधार्य तथाऽसकृत् ।*
*नव्य-भव्य-स्वरूपस्य निर्माणे सन्तु तत्पराः ॥२५॥*

आयात पण्डितवरा उपविश्य सार्धं
श्रुत्वा विविच्य च समस्तमिमं निवन्धम् ।
मिथ्याभिमान-रहिता द्रुतमात्मशुद्धौ
बद्धादरा भवत सम्मिलितप्रयत्नाः ॥२६॥

आत्मनः समीक्षणम् आत्मनः परीक्षणम् ।
आत्मनो निरीक्षणं श्रेयसो हि लक्षणम् ॥२७॥



# संस्कृत-व्यवहार-विषयकम्

## प्रथमं प्रकरणम्

### प्रथमः सन्देशः

( संस्कृतविद्यालयेषु पठन-पाठनयोः दैनिक-व्यवहारे च संस्कृतभाषाया अप्रयोगमुद्दिश्य )

इदमेव च मे तावत् प्रथमं क्लेशकारणम् ।
भवन्तः पाठशालासु यद् वदन्ति न संस्कृतम् ॥१॥
मां परित्यज्य यद् यूयं यथेच्छं देश्यभाषया ।
पाठशालास्वपि ब्रूथ तन्मे कष्टतरं महत् ॥२॥
अहन्तु भवतामेव पूर्वजैः ख्यातकीर्तिभिः ।
लालिता पालिता पूर्वं पोषिता परिवर्द्धिता ॥३॥
शाश्वतव्यवहारेण स्वाध्यायाभ्यसनैस्तथा ।
प्रापिता दूरदेशेषु चरमामुन्नतिं गता ॥४॥
परं सम्प्रति सैवाहं तेषामेव कुलोद्भवैः ।
भवद्भिर्व्यवहारेभ्यः कर्णमर्दं वहिष्कृता ॥५॥
भवन्तो मम माहात्म्यं वर्णयन्तोऽन्यसन्निधौ ।
स्वयं नैव वदन्तीति कियतीयं विडम्बना ॥६॥
याऽहमासं प्रचलिता पुरा देशान्तरेष्वपि ।
तस्या मे साम्प्रतं जाता स्वगेहेपीदृशी दशा ॥७॥
संस्कृतं पाठयन्तोऽपि भवन्तः पण्डिता मिथः ।
संस्कृतं नैव भाषन्ते इति मे महती व्यथा ॥८॥
नाध्यापने नाध्ययने न च प्रश्ने न चोत्तरे ।
न चापि वार्तालापादौ यूयं वदथ संस्कृतम् ॥९॥
अहमध्यापनागारे पूजायां यज्ञकर्मणि ।
तिष्ठामि गुप्ता सर्वत्र आत्मनः श्रवणेच्छया ॥१०॥

तथापि भवतां वक्त्रात् छात्राणां वा कदाप्यहम् ।
शृणोमि संस्कृतं नैव इति मे दूयते मनः ॥११॥
न वदन्ति स्वयं, नापि स्वशिष्यान् प्रेरयन्ति वा ।
भवन्तः सर्व एवापि देश्यभाषाः प्रयुञ्जते ॥१२॥
न च मद्भाषणे क्लेशो न व्ययो नापि रोगभीः ।
न चाऽपमानो न व्रीडा न च वा पातकं पुनः ॥१३॥
तथापि यद् भवन्तो मे व्यवहारं न कुर्वते ।
तत्र को हेतुरित्येतत् निर्णेतुं नैव पारये ॥१४॥
अनेके भवतां मध्ये आचार्या अपि पण्डिताः ।
संस्कृते न क्षमाः कर्तुं सम्यग् भावप्रकाशनम् ॥१५॥
वदन्त्यर्धं हसन्त्यर्धं खुं खुं च बहु कुर्वते ।
अनेकाः कुर्वतेऽशुद्धीरपि सामान्यभाषणे ॥१६॥
अवदिष्यन् भवन्तश्चेत् स्वशिष्यैः सह संस्कृतम् ।
अभविष्यन् भवन्तोऽपि प्रौढाः संस्कृतभाषणे ॥१७॥
भवतामेव लाभः स्याद् भूयानेतेन कर्मणा ।
परं भवद्भिर्विषये ध्यानं नैवात्र दीयते ॥१८॥
मुहुर्मुहुर्बोध्यमानाः प्रार्थ्यमानास्तथा मुहुः ।
बुध्यन्तोऽपि निजं लाभं भवन्तस्तन्न कुर्वते ॥१९॥
भवतामेव दोषेण भवद्विद्यार्थिनोऽपि हि ।
शास्त्र्याचार्य-परीक्षासु पठन्तः श्मश्रुला अपि ॥२०॥
भाषणे लेखने वार्तालापे प्रश्ने तथोत्तरे ।
भवन्ति सर्वथाऽशक्ताः सर्वे संस्कृतभाषणे ॥२१॥
पर भवन्तश्छात्राणां पश्यन्तोऽपीदृशीं त्रुटिम् ।
न व्यथन्ते त्रपन्ते वा किमाश्चर्यमतः परम् ॥२२॥
"सर्वे विद्यार्थिनो मे स्युः शक्ताः संस्कृतभाषणे" ।
कथं नैतादृशी श्रद्धा भवतां हृदि जायते ॥२३॥
यैश्छात्रैरथवा सेवा भवतां क्रियते सदा ।
भवन्तः संस्कृतोक्त्या तानुपकुर्वन्ति नो कथम् ॥२४॥

अतो हे पण्डिताः सर्वे आचार्याः शास्त्रिणस्तथा ।
महामहोपाध्यायाश्च सर्वेषां भवतां पुरः ॥२५॥
एकैवेयं प्रार्थना मे यद् भवद्भिः परस्परम् ।
स्वीयासु पाठशालासु मत्प्रयोगो विधीयताम् ॥२६॥
न त्वहं कामये पूजां पाठं वापि न कामये ।
कामये केवलं स्वीयं व्यवहारं भवन्मुखात् ॥२७॥
अध्यापका ! मिथो यूयं स्वशिष्यैश्च विशेषतः ।
सम्भवेच्चेत् स्वभृत्यैश्च संस्कृतं ब्रूत सर्वदा ॥२८॥
इयं मे महती वाञ्छा यच्छिष्या गुरवस्तथा ।
वदन्तु बहुधा सर्वे पाठशालासु संस्कृतम् ॥२९॥
विद्यार्थी पाठशालायां प्रविष्टो यद्दिने भवेत् ।
तद्दिनादेव वक्तव्यं सरलं तेन संस्कृतम् ॥३०॥
भवद्भिर्यन्मुखेनैव "आओ जाओ" निगद्यते ।
आगच्छ गच्छेति कथं तन्मुखेनैव नोच्यते ॥३१॥
ये ये भवद्भिर्दीयेरन् आदेशास्तान् प्रति स्वयम् ।
संस्कृते खलु ते सर्वे भवेयुर्नान्यथा क्वचित् ॥३२॥
भवन्मुखात् समाकर्ण्य छात्राः संस्कृतभाषणम् ।
तेऽपि वीतत्रपाऽशङ्का वदिष्यन्त्येव संस्कृतम् ॥३३॥
भवतामपि चाभ्यासो भविष्यत्यचिरेण वै ।
संकोचोऽयोग्यता लज्जा सर्वं दूरे भविष्यति ॥३४॥
यदि वा शिक्षणाभावात् अनभ्यासवशेन वा ।
तथा कठिनवाक्यानामनुवादे अमादपि ॥३५॥—
भवन्तो यदि लज्जन्ते भयभीता भवन्ति च ।
तदा तद्दोषनाशाय प्रयत्नः क्रियतां नवः ॥३६॥
एवं सङ्कोचमाकुञ्च्य हित्वाऽलस्यं त्रपां तथा ।
भूयो भवत सन्नद्धा मत्प्रयोगाय पण्डिताः ॥३७॥
नहि मे प्रान्तभाषाभिः ग्राम्यभाषाभिरेव वा ।
ईर्ष्या द्वेषो विरोधो वा लेशमात्रोऽपि विद्यते ॥३८॥

इमा अपि तु सन्तत्यो ममैव खलु वल्लभाः ।
चिरं जीवन्तु वर्धन्तामिति मे हार्दिकी स्पृहा ॥३६॥
परं भवन्तो जायन्तां संस्कृतस्यापि भाषणे ।
सम्यक् समर्था इत्येकं केवलं मे समीहितम् ॥४०॥
भवतां चिबुकं धृत्वा भूयो भूयो निवेदये ।
एकमात्रामिमामिच्छां भवन्तः पूरयन्तु मे ॥४१॥
इदमेकं ममाभीष्टं भवद्भिः पूरितं यदि ।
जीविष्यन्ति भवत्पुत्राः सुखिनः शरदां शतम् ॥४२॥

स्थाने स्थाने पथि पथि गृहाभ्यन्तरे वा बहिर्वा
गोष्ठ्यां गोष्ठ्यां सदसि सदसि प्रान्तरे वाऽपणे वा ।
यत्र क्वापि प्रणयिनि जने सङ्गते संस्कृतज्ञे
वार्तालापो भवतु भवतां देववाणी-विशिष्टः ॥४३॥

## द्वितीयः सन्देशः

(आंग्लकलाशालासु अध्यापने व्यवहारे वा
संस्कृतस्य गरीयसीमुपेक्षामुद्दिश्य)

'कालेजे'षु च ये केचिद् विश्वविद्यालयेषु वा ।
आचार्याः सन्ति भूयांसः प्राचार्याश्चाप्यनेकशः ॥१॥
तेषां प्रतिष्ठा महती प्रभूतञ्चापि वेतनम् ।
निवासे वेषभूषादौ तथा गुर्वी विशिष्टता ॥२॥
परं तेष्वपि विद्वांसो बहवः सुरभाषया ।
वदने लेखने वापि दृश्यन्ते बहुदुर्बलाः ॥३॥
एते संस्कृतभाषायाः प्राध्यापकपदे स्थिताः ।
बाहुल्येनांग्लभाषाया व्यवहारं वितन्वते ॥४॥
पाठयन्त्यांग्लभाषायां ब्रुवते चांग्लभाषया ।
लिखन्ति चांग्लभाषायां वैदेशिकजना इव ॥५॥
पाठः संस्कृतभाषाया ग्रन्थानामांग्लभाषया ।
शोभते कथमेतेषामिति वक्तुं न पारये ॥६॥

एभिः संस्कृतभाषायां व्याख्यानादिभयादहो ।
व्याख्यानाय परेभ्योऽपि दीयतेऽवसरो नहि ॥७॥
अनेनैव च दोषेण तेषां विद्यार्थिनोऽपि हि ।
भाषणावसरे प्रायो दूरे तिष्ठन्ति भीरवः ॥८॥
"कालेजे"षु त्वनेकेषु भारतभ्रमणे मया ।
वीक्षिता गुरवः शिष्या उभये मौनधारिणः ॥९॥
कासुचित्त्वथ शालासु संस्कृतस्यापि संसदि ।
उपक्रमोपसंहारौ आंग्ल्यामेव मया श्रुतौ ॥१०॥
तत्रैवाङ्गलभाषाया आचार्या आंग्लभाषया ।
प्रवदन्ति यथा तद्वत् संस्कृतज्ञा न संस्कृते ॥११॥
इमां परिस्थितिं दृष्ट्वा सभासु विषमामहम् ।
मुखं गोपायितुं स्थानं न लभेऽन्वेषयन्त्यपि ॥१२॥
पण्डितानां त्रुटिं मत्वा मदीयामेव मानवाः ।
दुर्गमेति कठोरेति विश्वसन्ति दृढं ततः ॥१३॥
एतदेव च तत्रत्या दृष्ट्वा विद्यार्थिनो दृशा ।
संस्कृतं कठिनं मत्वा तदधीतेरुदासते ॥१४॥
'हाईस्कूल' स्थितान् तस्मात् कालेजाध्यापकांस्तथा ।
विश्वविद्यालयस्थांश्च सर्वान् पण्डितपुङ्गवान् ॥१५॥
अहं बद्ध्वाञ्जली मूर्ध्ना भूयो भूयो निवेदये ।
नातः परमवज्ञा मे विज्ञा भूयो विधीयताम् ॥१६॥
वदन्तु संस्कृते छात्रैः सह कक्षासु सर्वदा ।
पाठयन्तु तथा सर्वान् ग्रन्थान् संस्कृतया गिरा ॥१७॥
आसीदेकः पुरा कालः प्रतिष्ठा यत्र केवलम् ।
भाषणादांग्लभाषायां विदुषां समजायत ॥१८॥
अद्य सा तु न दुर्बुद्धिः सुधीवृन्दे विलोक्यते ।
सर्वे शृण्वन्ति गैर्वाणीं वाणीं सुश्रद्धयाऽधुना ॥१९॥
तस्मादद्याऽप्रतिष्ठाया भीतिं त्यक्त्वा त्रपां तथा ।
देववाणीप्रयोगस्य पन्थाः प्रस्थाप्यतां नवः ॥२०॥

पद्यपाठैः सुरुचिरैः गीतैश्चापि मनोहरैः ।
नाटकैर्भाषणैर्लेखैः वादैः प्रहसनैस्तथा ॥२१॥—

विद्यालयानां स्वीयानां सम्पूर्णं वायुमण्डलम् ।
देववाणीमयं कृत्वा यथा देवो विराजताम् ॥२२॥

"कीदृशी सरला सेयं कीदृशी सुगमा तथा ।
लालित्यं पुनरेतस्याः कीदृशं लोकदुर्लभम् ॥"२३॥

एवं विश्वास उत्पाद्यः समाजे शिक्षितेऽधुना ।
भवच्छात्रैर्भवद्भिश्च प्रयोगेण परस्परम् ॥२४॥

भवतामांग्लभाषायाः प्रयोगेऽपि न मे व्यथा ।
कामं तत्रापि वक्तारो भवन्तः सन्तु विश्रुताः ॥२५॥

परन्तु संस्कृतं हित्वा तत्स्थानेऽप्यांग्लभाषया ।
बुधा व्यवहरेयुश्चेद् घोरमन्याय्यमेव तत् ॥२६॥

इदं खलु महत् पापं इयं निर्लज्जता परा ।
इयं मे निर्ममा हत्या "आंग्ल्या संस्कृतपाठनम्" ॥२७॥

प्राध्यापकः स मे शत्रुः प्राचार्यः स महान् रिपुः ।
विद्यार्थिनश्च ते सर्वे शिरश्शूलसमा मम ॥२८॥—

येषामन्तिमकक्षायाः पठने पाठनेऽपि वा ।
सामर्थ्यं संस्कृते वक्तुं सामान्यमपि नागतम् ॥२९॥

तस्मान्ममापि भवतामपि मानहन्त्रीं
हेयां प्रवृत्तिमपहाय द्रुतं भवन्तः ।
अध्यापने विनयनेऽथ मनोविनोदे
नूनं बुधा वदत देवगिरं प्रसन्नाः ॥३०॥

आरोहणे हिमगिरेः शिखरेऽतितुङ्गे
साफल्यमापुरधुना बहवो युवानः ।
स्वल्पप्रयत्नसुलभे सरले तदा वः
का वा नु संस्कृतगिरो वदने विपत्तिः ? ॥३१॥

## तृतीयः सन्देशः

### ( सामान्यव्यवहारेऽपि क्लिष्टसंस्कृतभाषायाः प्रयोगविषयमुद्दिश्य )

अयञ्चापि दुरभ्यासो भवतां मम कष्टकृत् ।
हित्वा मे सरलं रूपं कठिनं यत् प्रयुञ्जते ॥१॥
इयं मया मनोवृत्तिर्विदुषां बहुधेक्षिता ।
क्लिष्टोक्तिष्वेव मन्यन्ते यत्ते पाण्डित्यमात्मनः ॥२॥
बहवो विबुधा दृष्टा अनुप्रासाय केवलम् ।
शब्दानामप्रसिद्धानां प्रयोगे स्पृहयालवः ॥३॥
बहूनान्तु मया दृष्टो यङ्लुगन्तेऽधिकादरः ।
करोतीति विहायैतैः चर्करीतीति गद्यते ॥४॥
उच्यते कथ्यते चेत्यादिकं त्यक्त्वा तु ये बुधाः ।
"बम्भण्यते" इति प्राहुः कः स्वादस्तैर्नु लभ्यते ? ॥५॥
कामं कुरुत काठिन्यं प्रबन्धरचनादिषु ।
सामान्यव्यवहारेषु सारल्यं तु प्रयुज्यताम् ॥६॥
भवद्भिर्भाष्यकाराणां भाषाशैली निरीक्ष्यताम् ।
कीदृक्तैः सरला भाषा प्रयुक्ता चित्तहारिणी ॥७॥
किन्तु भाष्यं पठन्तोऽपि हन्त प्रायेण पण्डिताः ।
तादृशीं सरलां रम्यां नहि भाषां प्रयुञ्जते ॥८॥
इदं च बहुलोकानां मुखादाकर्णितं मया ।
"संस्कृतं सरलं श्रुत्वा हसन्ति बहवो बुधाः" ॥९॥
अनेनैव हि दोषेण भवद्भिः सरलाऽप्यहम् ।
कठिनेति कलंकेन समाजे मलिनीकृता ॥१०॥
"संस्कृतं कठिना भाषा संस्कृतं बहुदुर्गमा ।
अपि द्वादशभिर्वर्षैः वक्तुं नायाति संस्कृतम्" ॥११॥
एवं मद्विषये चर्चा स्थाने स्थाने नु जायते ।
लज्जयाऽहं यदाकर्ण्य भवामि नतमस्तका ॥१२॥

स्वजन्मभूमौ स्वगृहे स्वकुटुम्बे स्वसूनुषु ।
अहमेतादृशी जाता हा हन्त भयदायिनी ! ॥१३॥
"संस्कृतं सरला भाषा संस्कृतं सुगमाऽधिका ।
संस्कृते शक्यते वक्तुं केवलं दशभिर्दिनैः" ॥१४॥
एवं प्रचारः कर्तव्यो भवद्भिरधुना बुधाः ।
दर्शनीयं च बालेभ्यः शिक्षां दत्वा तथाविधाम् ॥१५॥
मद्-रूपं कठिनं कृत्वा पापं यद् विहितं पुरा ।
तस्य शुद्धिरनेनैव प्रचारेण भविष्यति ॥१६॥
तथैव बालशिक्षायै पुस्तकान्यपि कानिचित् ।
सरलानि सुवाच्यानि लेखनीयानि लेखकैः ॥१७॥
यथैवाऽपरभाषासु बालसाहित्यमुत्तमम् ।
सरलं सरसं रम्यं संस्कृतेऽपि तथेष्यते ॥१८॥
विहाय विकटाः सन्धीः समासं परिवर्ज्य च ।
लघुवाक्येषु लिख्यन्तां ललिता बालपुस्तिकाः ॥१९॥*

यदि ममोन्नयने भवतां स्पृहा
कठिनतामपनीय तदा द्रुतम् ।
प्रचलिता ललिता सरला शुभा
मधुमयी बुध ! वागुपयुज्यताम् ॥२०॥

## चतुर्थः सन्देशः

( अनावश्यकत्वेऽपि वैदेशिकशब्दानां विद्वत्समाजे
प्रयोगस्य बहुलतामुद्दिश्य )

इदञ्च मेऽपरं दुःखं स्वभाषाभाषणेऽपि यत् ।
बहून् वैदेशिकान् शब्दान् बुधाःप्रायः प्रयुञ्जते ॥१॥

---

* यथा बालकवितावलिः तथा बालसंस्कृतम् च ( सार्वभौमसंस्कृत प्रचार कार्यालय द्वारा प्रकाशितम् )

यूयं तु बहुधा वार्तालापेऽनावश्यकानपि ।
पारस्यान् यावनानाङ्ग्लान् शब्दान् वदथ निर्भयम् ॥२॥
"रिजल्ट सेन्टर नम्बर च होस्टल वार्डन रजिस्टरी ।
कॉपी रजिष्टर होल्डर निब टाइम सर्टिफिकेट तथा ॥३॥
मुकदमा मुद्दई मुद्दाअलेह डिगरी हुकुम तथा ।
कचहरी कायदा कानून हाजिरी गैरहाजिरी" ॥४॥
इत्येवं प्रायशो यूयं साधुशब्देषु सत्स्वपि ।
शब्दान् वैदेशिकान् ब्रूथ निःसङ्कोचं निरन्तरम् ॥५॥
"अस्माभिः संस्कृता एव शब्दा वाच्या नहीतरे ।
अभावे सति शब्दानां कर्तव्या नवनिर्मितिः" ॥६॥
इत्येवं भावना भव्या भवतां नैव दृश्यते ।
नैतदर्थं क्वचित् कोऽपि प्रयत्नो वा विधीयते ॥७॥
भवद्भिर्नूतनः शब्दो निर्मातुं शक्यते न चेत् ।
अन्यनिर्मितशब्दानां प्रयोगः क्रियतां तदा ॥८॥
परं संस्कृतशब्दानां निर्मितानामपीतरैः ।
सङ्ग्रहे वा प्रयोगे वा भवन्तः शिथिला भृशम् ॥९॥
राजकीयेषु कार्येषु आङ्ग्लविद्यालयेषु च ।
बहु-संस्कृतशब्दानां प्रयोगः क्रियतेऽधुना ॥१०॥
केन्द्रेणाथ प्रदेशैश्चाप्यशेषैः सुनियोजितम् ।
निर्मिता बहवः शब्दाः प्रयुज्यन्ते च सादरम् ॥* ११॥
परं संस्कृतशालासु बहुसम्मानपूर्वकम् ।
पण्डितैरांग्लशब्दानां व्यवहारो विधीयते ॥१२॥
यथा ते "प्रिन्सिपल" नाम्ना सम्बुद्धौ यान्ति सम्मुदम् ।
न तथाऽऽचार्यशब्देन किमाश्चर्यमतः परम् ॥१३॥
कामं स्यादांग्लभाषायाः पाण्डित्यं पण्डिते परम् ।
अन्या वा सकला भाषाः कामं जानन्तु पण्डिताः ॥१४॥

---

* अवलोक्यन्तां केन्द्रद्वारा तथा तत्तत्प्रदेशीयशासनैश्च पुस्तकरूपेण प्रकाशिता विविधविषयसम्बद्धा अनेकाः पारिभाषिकशब्दावल्यः ।

परन्त्वाङ्गलशब्दानामन्येषां वा विदेशिनाम् ।
अनावश्यकरूपेण प्रयोगो नैव शोभनः ॥१५॥
अथ वैदेशिकाः शब्दा नहि भारतवासिनाम् ।
भावनां संस्कृतिं वापि क्वचिद् व्यञ्जयितुं क्षमाः ॥१६॥
नहि "उस्ताद" शब्दो वा न वा 'टीचर-मास्टरौ" ।
गुरुशब्दग—निष्ठाया अर्हतः षोडशीं कलाम् ॥१७॥
धर्मपत्नीति शब्देन व्यक्ता या भव्यभावना ।
"वीवी" "वाइफ" शब्दाभ्यां सा लब्धुं नैव शक्यते ॥१८॥
शिष्येतिश्रुतिमात्रेण विनयो यः प्रतीयते ।
स तु "पीपुल" संज्ञायां सर्वथैव सुदुर्लभः ॥१९॥
अथ संस्कृतशब्दानां शिष्टानां शब्दकोविदैः ।
उच्चारणेन पुण्यं ये मन्यन्ते नाम पण्डिताः ॥२०॥
कथं धर्मात्मनां तेषां विदुषां वदनाद्बहिः ।
एते वैदेशिकाः शब्दा निस्सरन्तु निरर्गलम् ॥२१॥
अतस्तथाविधान् शब्दान् हित्वा संस्कृतपण्डिताः ।
प्रयोगो निजशब्दानां क्रियतां कार्यतां तथा ॥२२॥
संग्राह्या नूतना विज्ञैः सर्वे शब्दा यतस्ततः ।
स्वयञ्चापि विनिर्मेयाः कृत्वा संघटनं मिथः ॥२३॥
ते धन्या आंग्लभाषाज्ञा देश्यभाषाविदस्तथा ।
निर्मान्ति नूत्नान् शब्दान् ये तत्प्रयोगं च कुर्वते* ॥२४॥
एतदर्थं तु ते सर्वे कुर्वन्त्यान्दोलनान्यपि ।
येन संस्कृतशब्दानां व्यवहारोऽधिको भवेत् ॥२५॥
भवन्तस्तु पठित्वा मां भूत्वा चाऽध्यापकास्तथा ।
एतस्मिन् विषये सर्वे निश्चिन्ता हन्त शेरते ॥२६॥

---

* अवलोक्यताम्—
१—डा० रघुवीर—सम्पादितः महान् कोषः ।
२—महापण्डित राहुल सांस्कृत्यायन—सम्पादितः कोषः ।
३—विश्वकवि रवीन्द्रनाथ ठाकुर—संकलिताः शब्दाः ।

यदासीद् भवतां कार्यं तत् कुर्वन्त्यपरे जनाः ।
तद् दृष्ट्वाऽपि न युष्माभिर्यत्नः कश्चिद् विधीयते ॥२७॥
अधुनाऽपि तु सम्मिल्य तथा यत्नो विधीयताम् ।
भवतामपि जायेत यथा देशे यशः स्थिरम् ॥२८॥

कर्तव्यमासीद् भवतां प्रधानं
यद् धार्मिकाणामिह पण्डितानाम् ।
अधार्मिको ? डाक्टर लोहिया तत्
करोत्यहो पश्यत लोचनाभ्याम् ॥२९॥

अथ च —

एकस्यैवांग्लशब्दस्य स्थाने प्रादेशिकैर्बुधैः ।
भिन्न-भिन्नाः प्रयुज्यन्ते शब्दा भिन्नार्थबोधकाः ॥३०॥ *
एतेन संस्कृतज्ञानामपि मध्ये महान् भ्रमः ।
जायते क्वचिदालापे भिन्नप्रान्तनिवासिनाम् ॥३१॥
स्थाने तादृशशब्दानां यद्येकस्यैव कस्यचित् ।
व्यवहारो विधीयेत सौविध्यमधिकं भवेत् ॥३२॥
तस्माद्विद्वज्जनैरस्मिन् विषयेऽपि विवेचना ।
कार्या संस्कृतशब्दानां प्रयोगे साम्यसिद्धये ॥३३॥

### पञ्चमः सन्देशः

(ग्राम्याणाम्, अश्लीलानाम् अशुद्धशब्दानां च
प्रयोग-प्राचुर्यमुद्दिश्य)

स्वभाषामप्यवर्द्धयंश्चेद् भवन्तः साधुशोभनाम् ।
तदापि परितोषो मेऽभविष्यन्मनसो मनाक् ॥१॥
परं यां ब्रुवते भाषां भवन्तः सापि जायते ।
ग्राम्यशब्दाऽधिकाऽश्लीलाऽशुद्धा चापि क्वचित् क्वचित् ॥२॥

---

* यथा आंग्लभाषायाः सेक्रेटरी (Secratory) शब्दस्य स्थाने हिन्दी प्रदेशेषु "मन्त्री", वङ्गभाषायां "सम्पादक", महाराष्ट्रभाषायां "कार्यवाह", तथा दाक्षिणात्यभाषासु "कार्यदर्शी" तथा क्वचित् प्रदेशे "सचिव" इति शब्दः प्रयुज्यते । एवमेव बहूनि उदाहरणानि लब्धुं शक्यन्ते ।

अथ नैतावतैवालं, बहूनान्तु मुखादहम् ।
ग्राम्या गालीरपि भ्रष्टाः शृणोमि बहुदुःखदाः ॥३॥
"श्वसुरा" दिपदैः प्रायस्तथा गुप्ताङ्गवाचकैः ।
शब्दैरपि बुधाः केचिद् व्यवहारं प्रकुर्वते ॥४॥
क्वचिद् हास्ये क्वचित् क्रोधे दुरभ्यासवशात् क्वचित् ।
विद्वांसोऽपि प्रभाषन्ते अपशब्दानहो बहून् ॥५॥
न च ते केवलं वार्तालापे वा पाठनेऽथवा ।
अपि यज्ञेषु पूजायां पाठे चापि प्रयुञ्जते ॥६॥
यत्राऽपशब्दकथनात् प्रायश्चित्तीयते नरः ।
तत्र हा निर्भया भूत्वाऽपभाषन्ते विपश्चितः ॥७॥
यदि पण्डितलोकानां शास्त्रज्ञानामियं दशा ।
किं वाच्यं तत्र मूर्खाणां यजमान-पुरोधसाम् ॥८॥
पण्डिता अपि भाषन्ते यद्यश्लीला अहो गिरः ।
"घूरहू" "कतवारू" च ततः किमपराध्यतः ॥९॥
अथ हिन्द्याः प्रयोगेऽपि प्रायेण बहवो बुधाः ।
अशुद्धीः कुर्वतेऽनेका हास्यतामुपयान्ति च ॥१०॥
वाच्यभेदे लिङ्गभेदे "ने" प्रयोगे विशेषतः ।
ब-व भेदे च भूयांसो बहुधा कुर्वते त्रुटिम् ॥११॥
अस्मादेव भयाद्भीता बहुसंस्कृतपण्डिताः ।
पलायनपरा दृष्टा लेखने भाषणे तथा ॥१२॥
यैरनेके महाग्रन्थाः पीता आप इवाऽखिलाः ।
ते हिन्दीनियमान् कांश्चिद् बुधा बोद्धुं न किं क्षमाः ! ॥१३॥
अतो बुधवरैः शुद्धा श्लीला सभ्या च सूनृता ।
देश्यभाषाऽपि वक्तव्या विशिष्य जनसन्निधौ ॥१४॥
एकापशब्दकथनादपि धर्मबुद्ध्या
यत्पूर्वजैरभिहितः सुमहानधर्मः ।
ते पण्डिता अनिशमेकशतापशब्दा—
न्नित्यं वदन्ति यदि किन्नु कुलोचितं तत् ? ॥१५॥

# संस्कृत-प्रचार-विषयकम्

## द्वितीयं प्रकरणम्

### प्रथमः सन्देशः

( संस्कृतप्रचाराय प्रयत्नस्य तदर्थं संघटनस्य च
महान्तमभावमुद्दिश्य )

इदं च मेऽपरं कष्टं भृशं व्यथयते मनः ।
भवन्तो मत्प्रचारार्थं प्रयत्नं यन्न कुर्वते ॥१॥

हिन्दीप्रचारे हिन्दीज्ञा वर्तन्ते तत्परा यथा ।
यथा वा यवना उर्दू सेवायै सन्ति तत्पराः ॥२॥

तथा प्रवृत्तिर्भवतां मत्प्रचारे न दृश्यते ।
न वा सा व्यग्रतोत्कण्ठा भवत्सु क्वचिदीक्षिता ॥३॥

उत्तरे दक्षिणे वापि मध्यभागेऽथवा पुनः ।
पुण्ये ब्रह्मर्षिदेशे वा सर्वत्रैवेदृशी दशा ॥४॥
कश्मीरेषु मया येषु पुरा विलसितं चिरम् ।
तस्याऽर्धो यवनैः क्रान्तस्ततो दुःखतरं नु किम् ? ॥५॥
एवं सर्वप्रदेशेषु दृष्ट्वा संस्कृतपण्डितान् ।
आत्मानं प्रत्युदासीनान् भृशमस्मि सुदुःखिता ॥६॥
भवताञ्चेत् प्रयत्नेन मदीया सुस्थितिर्भवेत् ।
भवन्तोऽपि तदा सर्वे सुखिनः स्युरसंशयम् ॥७॥
देशे सर्वत्र यदि मेऽनिवार्यं शिक्षणं भवेत् ।
जीविकायास्तथा क्षेत्रं यदि वो विस्तृतं भवेत् ॥८॥—
वेतनञ्चापि पर्याप्तं यदि निर्धारितं भवेत् ।
सुख-सम्मान-युक्ताः स्युर्भवन्तोऽपि तदाऽन्यवत् ॥९॥
परं पण्डितवर्गस्य ध्यानं नैवात्र गच्छति ।
न चैतदर्थं सम्मिल्य प्रयत्नं कुर्वतेऽखिलाः ॥१०॥

एकैकस्मिन् जनपदे यावन्तः सन्ति पण्डिताः ।
तथाऽन्यशिक्षासंस्थानां सर्वे संस्कृतशिक्षिताः ॥११॥
वैद्या ज्योतिर्विदश्चैव पौराणिक-पुरोहिताः ।
परस्परं मिलित्वैते सर्वे संस्कृतजीविनः ॥१२॥
नगरे नगरे ग्रामे ग्रामे कृत्वा सभादिकम् ।
प्रयत्नं मत्प्रचाराय कुर्वीरंश्चेत् यथोचितम् ॥१३॥
तदा कथं न मे भूयान् प्रचारः सर्वतो भवेत् ।
कथं मत्सेविनां वापि न जायेत दशा शुभा ? ॥१४॥
पूजा-पाठाद्यनुष्ठाने दक्षिणायाः सभासु च ।
पण्डिताः स्वल्पलाभार्थं धावन्ति विकला बहु ॥१५॥
यदि तादृश उत्साहो विधीयेत मदुन्नतौ ।
दशा पण्डितवर्गस्य चिराय सुदृढ़ा भवेत् ॥१६॥
परन्तु सकलं कष्टं सहमाना इमे बुधाः ।
तदर्थं प्रयतन्ते नो न जाने केन हेतुना ॥१७॥
येन केनापि रूपेण यापयन्तः स्वजीवनम् ।
निन्दा-गालिप्रदानाभ्यां सन्तोषं हन्त कुर्वते ॥१८॥
"अहो कथञ्चित् पठितं दौर्भाग्यात् संस्कृतं मया ।
अग्रे न पाठयिष्यामि सुतं कमपि संस्कृतम्" ॥१९॥
एवं वदन्तो भूयांसः पण्डिता वीक्षिता मया ।
परं ते प्रयतन्ते नो मदुद्धाराय जातुचित् ॥२०॥
अस्मिन् काले तु यः कश्चित् प्रचारो दृश्यते मम ।
या च चर्चा चतुर्दिक्षु जायते श्रुतिगोचरा ॥२१॥
तत्रापि भवतां कश्चित् पुरुषार्थो न कारणम् ।
हेतुस्तु तत्राधुनिकी देशकालपरिस्थितिः ॥२२॥
स्वातन्त्र्यं, राष्ट्रभाषात्वं हिन्द्याः, हिन्दीविदां रुचिः ।
नेतॄणां संस्कृते श्रद्धा कारणं तत्र वर्तते ॥२३॥
श्रद्धानन्दो दयानन्दो विवेकानन्द एव च ।
तिलको मालवीयश्च राधाकृष्णन् महाशयः ॥२४॥

गान्धी पटेलो राजेन्द्रः कुह्नन् राजा च काटजू ।
अरविन्दो रवीन्द्रश्च अणे सावरकरस्तथा ॥२५॥
चटर्जी[1] च मुखर्जी[2] च रघुवीरः पणिक्करः ।
श्री वासुदेवशरणः श्री सहायस्तथा[3] सुधीः ॥२६॥
टण्डनो राहुलो मुन्शी[4] भगवद्दास एव च ।
नरेन्द्रदेवः सम्पूर्णानन्दो गोल्वल्करस्तथा ॥२७॥
एतेषामेव केषाञ्चित् लेख-व्याख्यान-बोधनैः ।
लोकानां हृदये जाता श्रद्धा काचन मां प्रति ॥२८॥
भवद्भिस्तु स्वयत्नेन स्वान्दोलनबलेन च ।
उल्लेखनीयं किमपि कार्यं न खलु साधितम् ॥२९॥
यदाकदाचित् केषाञ्चिद् भवतामपि चेतसि ।
उत्पद्यते समुत्साहः परं क्षणिक एव सः ॥३०॥
ये च केचन वर्तन्ते पञ्च सप्त मनीषिणः ।
संस्कृतस्य प्रचाराय सोत्साहं बद्धकङ्कणाः ॥३१॥
तेऽपि पण्डितलोकानां सहयोगाद्यभावतः ।
किञ्चित् कर्तुं क्षमन्ते नो निरुत्साहा भवन्ति च ॥३२॥
एको गिरिधरः शर्मा चतुर्वेदी महाशयः ।
चिरं प्रयत्नं कृतवान् मदुद्धाराय चेतसा ॥३३॥
परं पण्डितलोकानां सहयोगाद्यभावतः ।
सोऽपि पूरयितुं नैव शक्तवान् स्वमनीषितम् ॥३४॥
पण्डितो यदि कोऽप्येकः किञ्चित् कर्तुं प्रवर्तते ।
तदाऽपरे विरुन्धन्ति साहाय्यं च न कुर्वते ॥३५॥
"यद्ययं पण्डितः किञ्चिन्नवं कार्यं करिष्यति ।
अस्यैव नाम कीर्तिश्च प्रतिष्ठा च भविष्यति" ॥३६॥
एवमीर्ष्या-प्रतिस्पर्द्धा-द्रोहाद्याविष्टचेतसः ।
पण्डिताः पण्डितानां तु न कुर्वन्ति सहायताम् ॥३७॥

---

१—डा० सुनीतिकुमार चटर्जी । २—डा० श्यामा प्रसाद मुखर्जी ।
३—आचार्य शिवपूजन सहाय । ४—श्री कन्हैया लाल माणिक लाल मुंशी ।

"नाऽहं सभापतिर्मन्त्री नाधिकारी च कश्चन ।
न तत्र समयो मह्यं प्रदत्तो भाषितुं तथा ॥३८॥
न वा निमन्त्रणं लब्धं नो वाऽहूतो विशेषतः ।
भोजनादि-प्रबन्धश्च सम्यक् तत्र न जायते" ॥३९॥
भूयांसोऽनेन रोषेण विद्वांसो जातमत्सराः ।
सभा-सम्मेलनादिभ्यो दूरे तिष्ठन्ति सर्वदा ॥४०॥
एभ्य एव तु हेतुभ्यस्तथाऽलस्यवशात् क्वचित् ।
पण्डितानां सभा काचित् सर्वदा न चलत्यहो ॥४१॥
एकं "संस्कृतसाहित्यसम्मेलन" मपि स्थितिम् ।
नाद्यावधि गतं भव्यां किन्तु दुःखसतः परम् ॥४२॥
एवं प्रचारकार्येषु शैथिल्येन मनीषिणाम् ।
मम वा भवतां वापि जायते नो दशा शुभा ॥४३॥
परं प्रचारकालेऽस्मिन् आलस्यं भवतामिदम् ।
सत्यं सत्यं बुधा ! ब्रूत शोभते किं मनागपि ॥४४॥
अस्मिन् संक्रान्तिकाले तु यदि यत्नः कृतो नहि ।
व्यतीतेऽवसरे पश्चात् किं यूयं साधयिष्यथ ॥४५॥
अतोऽहं प्रार्थये युष्मान् भूयो भूयोऽखिलान् बुधान् ।
अद्यैव मत्प्रचाराय कुर्वन्तु ननु निश्चयम् ॥४६॥
बहुव्रतानि कुर्वन्ति भवन्तः प्रतिवत्सरम् ।
इदानीमिदमप्येकं व्रतं स्वीक्रियतां नवम् ॥४७॥
व्याख्यानेनाथ लेखेन सभासम्मेलनादिभिः ।
आयोजनेन गोष्ठीनां सङ्गीताभिनयैस्तथा ॥४८॥
प्रदर्शनीभिर्ग्रन्थानां कविसम्मेलनेन च ।
पुराणवाचनैश्चापि तथा प्रहसनादिभिः ॥४९॥
विद्यालयानां सर्वेषां छात्रैरध्यापकैस्तथा ।
आरम्भो मत्प्रचाराय स्वीये क्षेत्रे विधीयताम् ॥५०॥
सर्वे शिष्यास्तथाऽचार्या लब्ध्वा व्याख्यानपाटवम् ।
ग्रामे ग्रामे सभां कृत्वा बोधयन्त्वखिलान् जनान् ॥५१॥

इदानीमपि युष्माभिः प्रयत्नः क्रियते न चेत् ।
कृष्णा कलंकलेखेयं ललाटान्नापयास्यति ॥५२॥
निर्धना यदि विद्वांसः कुटुम्बभरणाकुलाः ।
न प्रचारे समर्थाः स्युस्तदा मे कापि न व्यथा ॥५३॥
परन्तु येषां विदुषां समीचीनाऽर्थिकी स्थितिः ।
येषां पुत्राश्च पौत्राश्च अर्जन्ति विपुलं धनम् ॥५४॥
तादृशैस्तु बुधैः सर्वैः गृहचिन्ताविवर्जितैः ।
स्वकीयः समयो देयो मत्प्रचाराभिवृद्धये ॥५५॥
अन्यान्येषु समाजेषु भूयांसः सन्ति तादृशाः ।
यैः समाजाय सम्पूर्णं जीवनं स्वं समर्पितम् ॥५६॥
परं संस्कृतविद्वत्सु न तथा कोऽपि पण्डितः ।
येन संस्कृतसेवायै जीवनं स्यात् समर्पितम् ॥५७॥
पश्यन्तु पण्डिताः सर्वे भूदानाऽन्दोलनेऽधुना ।
विनोबा जीर्णकायोऽपि कीदृशं कुरुते श्रमम् ? ॥५८॥
अस्य यज्ञस्य सम्पूर्त्यै बहवो देशसेवकाः ।
जयप्रकाशप्रमुखा जीवनान्यददुः सुखम् ॥५९॥
सच त्र्यशीतिवर्षीयो राजाजी* भीष्मसन्निभः ।
अविश्रमं श्रमं हंहो कीदृशं कुरुते सदा ॥६०॥
तथैव केचिद् विद्वांसो दद्युश्चेज्जीवनं निजम् ।
संस्कृताय तदा तेषां कीदृशं नु यशो भवेत् ॥६१॥
सम्पूर्णेषु प्रदेशेषु एक एकोऽपि पण्डितः ।
भवेज्जीवनदानी चेत् प्रचारो मे महान् भवेत् ॥६२॥
परं पण्डितलोकेषु धनिष्वपि सुखिष्वपि ।
लोभालस्य-वशान्नेदृग् जागर्ति त्यागभावना ॥६३॥
व्याख्यानं तु बहोः कालाद्दीयते देवगीःस्तुतौ ।
परमुन्नतये तस्याः कार्यकर्ता सुदुर्लभः ॥६४॥

---

* श्री चक्रवर्ती राजगोपालाचारी ( स्वतन्त्र-दलस्य प्रवर्तकः ) ।

पादौ प्रसार्य विद्वांसः स्वगृहे वत शेरते ।
न च कश्चित् प्रचारार्थं कष्टं कर्तुं समीहते ॥६५॥
दक्षिणासमयेऽसंख्याः समायान्ति विपश्चितः ।
स्वल्पा एव तु दृश्यन्ते परं संस्कृतसंसदि ॥६६॥
अहोहो वत दौर्भाग्यं स्वकीयं कथयामि किम् ।
यत् स्वस्थोऽपि समर्थोऽपि पण्डितो दयते न माम् ॥६७॥

परन्तु—

एतावति बुधवर्गे जीवत्यपि या दशाऽस्ति मे दीना ।
विज्ञेयाऽखिल-पण्डितमण्डल-भाले कलङ्कलेखेयम् ॥६८॥
तस्मान्मुक्त्वाऽलस्यं स्वार्थं स्वल्पीविधाय च स्वीयम् ।
समयः कश्चिद् देयो नूनं विबुधैः प्रचारकार्येऽपि ॥६९॥

तस्यैव जन्म सफलं विमला च कीर्तिः
वन्द्यः स एव च महामनुजो जगत्याम् ।
यो निस्पृहेण मनसा निजदेशभाषा—
साहित्य-संस्कृति-सुरक्षणतत्परः स्यात् ॥७०॥

## द्वितीयः सन्देशः

( पण्डितपुत्राणां संस्कृतज्ञानशून्यत्वमुद्दिश्य )

इदं च बहु मन्यध्वं बुधा ! मत्खेदकारणम् ।
यद् भवन्तो निजान् पुत्रान् संस्कृतं पाठयन्ति नो ॥१॥
प्रायः सर्वेऽपि विद्वांसो महान्तो लघवोऽपि वा ।
आङ्ग्लविद्यालयेष्वेव पाठयन्ति निजान् सुतान् ॥२॥
तत्रापि संस्कृतं हित्वा बहूनां विदुषां सुताः ।
कृषि-वाणिज्य विज्ञान-विषयान् समधीयते ॥३॥
मन्येऽहमुन्नतिं दृष्ट्वा भवन्तः प्रतिवेशिनाम् ।
आत्मनोऽपि समृद्ध्यर्थं पाठयन्ति तथा सुतान् ॥४॥
परं पण्डितपुत्राणामेवं संस्कृतशून्यता ।
भवन्त एव भाषन्तां शोभते किं मनागपि ॥५॥

आयेन संस्कृतस्यैव पठन्तो भवतां सुताः ।
संस्कृतज्ञानशून्याः स्युरिति लज्जावहं न किम् ॥६॥
कामं पठन्तु ते सर्वा अपि भाषा न मेऽप्रियम् ।
परं ममापि तु त्यागं न कुर्वन्तु कथञ्चन ॥७॥
आङ्ग्लभाषामधीयानैरपि किन्न भवत्सुतैः ।
संस्कृतं शक्यतेऽध्येतुं भवताञ्चेदभीप्सितम् ? ॥८॥
परन्त्वनेके विदुषां पुत्रास्तेषामुपेक्षया ।
एकमप्यक्षरं हन्त ! संस्कृतस्य न जानते ॥९॥
एवं पण्डितपुत्राणां संस्कृतस्य विवर्जनात् ।
विदुषां बहुभिर्गेहैरहो निष्काशिताऽस्म्यहम् ॥१०॥
मद्द्वारा लब्धवित्तेन प्रासादो यो विनिर्मितः ।
रमते तत्र काऽप्यन्या इति मे दुःखदं न किम् ॥११॥
अहो पण्डितलोकानां कीदृशीयं कृतघ्नता ।
मत्प्रसादेन जीवन्तः स्वयं मां हन्तुमुद्यताः ॥१२॥
पाठयन्त्यपरान् बालान् यत्नादाहूय संस्कृतम् ।
स्वपुत्रानाङ्ग्लभाषां च कीदृशीयं बिडम्बना ॥१३॥
श्रूयतां विबुधाः सर्वे नीतिरेषा विसृज्यताम् ।
विधीयन्तां निजाः पुत्राः सर्वे संस्कृतशिक्षिताः ॥१४॥
द्वौ वा त्रयोऽथवा पुत्रा भवेयुर्भवतां यदि ।
तेष्वेकोऽवश्यमध्याप्यः संस्कृतं तु सुनिश्चितम् ॥१५॥
अथाऽपरे पठेयुर्ये आङ्लभाषां भवत्सुताः ।
तेऽपि पाठ्या यथाशक्ति संस्कृतं स्वगृहेऽखिलाः ॥१६॥
येन केनापि यत्नेन भवद्भिः स्वीयसूनवः ।
कार्याः संस्कृतभाषाया भाषका लेखका विदः ॥१७॥
बालका द्वित्रिवर्षीया भवेयुर्भवतां यदा ।
संस्कृते वदितुं किञ्चित् शिक्षणीयास्तदैव ते ॥१८॥
यज्ञोपवीतपर्यन्तं पण्डितैर्निजबालकाः ।
कार्याः सामान्यवार्तासु संस्कृते वदितुं क्षमाः ॥१९॥

ततश्च पाठशालायां स्वगृहे वा निजाः सुताः ।
केवलं संस्कृतं शिक्ष्याः समं वाऽङ्गलभाषया ॥२०॥
लभन्तां भवतां पुत्राः सर्वभाषासु पाटवम् ।
पदानि च महोच्चानि तन्मे प्रीतिकरं परम् ॥२१॥
परं सर्वास्ववस्थासु संस्कृतज्ञा भवन्तु ते ।
संस्कृते स्नेहवन्तश्च इति मे केवलं स्पृहा ॥२२॥

अथ च—

भवतां यदि पुत्राः स्युः संस्कृतज्ञानसंयुताः ।
आचारोऽपि ततस्तेषां नूनं जायेत संस्कृतः ॥२३॥
संस्कृताज्ञानतस्तेषां कीदृशी नु दशाऽधुना ।
बहवः "साहबा" जाता विदुषामद्य सूनवः ॥२४॥
वेष-भाषा-सदाचारै र्व्यवहारेण चाऽधुना ।
अनेके विदुषां पुत्रा भान्ति वैदेशिका इव ॥२५॥
एतत् सर्वं समालोच्य वारं वारं निवेदये ।
भवत्सुतानां नो युक्ता संस्कृतज्ञानहीनता ॥२६॥
निस्सार्य मामथ च केवलमाङ्गलभाषा—
मध्याप्य धर्मविमुखांश्च सुतान् विधाय ।
हा हन्त यूयमपि भौतिक-भूति-लुब्धा
मा पण्डिता भवत नास्तिकभावभाजः ॥२७॥

## तृतीयः सन्देशः

( स्वकन्यानां स्वभार्याणाञ्च संस्कृतशिक्षणस्याभावमुद्दिश्य )

अयमप्यपरो दोषो वर्तते भवतां महान् ।
यत् स्वकन्याः स्वभार्याश्च संस्कृतं शिक्षयन्ति नो ॥१॥
कन्यानामपि शास्त्रेषु पुत्रवत् शिक्षणं स्मृतम् ।
वैदुष्यार्थं तथा तासाम् उपाया अपि दर्शिताः[1] ॥२॥

---

१—अथ य इच्छेद् दुहिता मे पण्डिता जायेत सर्वमायुरियादित्यादि ।
( बृहदारण्यकोपनिषद् ६-४-१६ )

सुशिक्षिता एव कन्या भवन्त्यादर्शमातरः ।
संस्कृतज्ञा यदि स्युस्ताः सुवर्णे सौरभं भवेत् ॥३॥
विषयेऽस्मिन् भवद्भिस्तु प्रायो ध्यानं न दीयते ।
शिक्षयन्ति निजाः कन्या न भाषां न च संस्कृतम् ॥४॥
स्वभाषाज्ञानसत्त्वेऽपि संस्कृतं शिक्ष्यते न चेत् ।
तस्याः पण्डितपुत्रीत्वं कथं ज्ञातं भविष्यति ॥५॥
यदि पण्डितकन्याः स्युः सर्वाः संस्कृतशिक्षिताः ।
अल्पीयसा मे कालेन प्रचारो विपुलो भवेत् ॥६॥
भवन्तो यदि वाञ्छेयुः प्रयतेरंश्च तत्त्वतः ।
मैत्रेयी भारती गार्गी भूयोऽपि स्युर्गृहे गृहे ॥७॥
धन्या सा काऽपि कन्याऽसीद् राजन्यकुल-भूषणम् ।
वेदविध्वंसनं दृष्ट्वा भृशं या दुःखिताऽभवत् ॥८॥
परन्तु विदुषां गेहे कियन्त्यः सन्ति कन्यकाः ।
या नामान्यपि जानन्ति वेदशास्त्रादिकस्य हा ॥९॥
अतो भवद्भिः कन्याभ्यो भाषायाः संस्कृतस्य च ।
शिक्षा देया प्रयत्नेन प्रचारो येन मे भवेत् ॥१०॥
तथैव यदि युष्माकम् अङ्गनाः स्युर्न शिक्षिताः ।
शिक्षणीयाः स्वगेहेऽपि नवीनैस्तु विशेषतः ॥११॥
प्राचीने भारतेऽभूवन् भूयस्यो ललनाजनाः ।
विदुष्य इति प्राचीनग्रन्थैर्विज्ञायते स्फुटम् ॥१२॥

तथा हि—

"अपाला रोमशा घोषा लोपामुद्राऽथ शाश्वती ।
विश्वावारा यमी मेधा-दक्षिणा-सरमादयः" ॥१३॥
एता मन्त्रकृतोऽनेका आसन् नार्योऽपि भारते[२] ।
स्वदेशं जन्मभिर्यासां धन्यं मन्यामहे वयम् ॥१४॥

---

२—शौनकाचार्यकृताया आर्षानुक्रमण्या दशममण्डलस्य अन्तिमो भागो द्रष्टव्यः ।

मैत्रेयी-सुलभाऽत्रेयी-गार्गी-प्रभृतियोषिताम् ।
ज्ञानं दर्शनशास्त्रीयं सभास्वद्यापि गीयते[3] ॥१५॥
"गौतम्युत्पलवर्णा च क्षेमा तारा तथोत्तरा ।
संघा पूर्णा पटाचारा सुन्दरी पूर्णिमोत्तमा" ॥१६॥
इत्येता बौद्धकालेऽपि महिला लब्धकीर्तयः ।
अनेका अभवन् यासां "थेरी गाथा"[4] निदर्शनम् ॥१७॥
गङ्गा तिरुमलाम्बा च लक्ष्मीदेवी शशिप्रभा ।
विज्जका मोरिका विद्या शीला-भट्टारिकादयः ॥१८॥
कवयित्र्योऽपि भूयस्योऽभूवन् भारतभूतले ।
यासां काव्यकलाकाशे राजते कीर्तिकौमुदी ॥१९॥
न केवलं ब्राह्मणानाम् अन्यवर्णोद्भवा अपि ।
रमण्यमण्योऽनेका आसन् विद्याविशारदाः[5] ॥२०॥
परं सम्प्रति युष्माकं पण्डितानामपि गृहे ।
गृहिण्यो नैव जानन्ति स्वल्पं संस्कृतमप्यहो ॥२१॥
भवन्तो बहुशास्त्रज्ञा भवत्पत्न्यो निरक्षराः ।
दम्पत्योरीदृशं हन्त वैषम्यं किमु शोभते ॥२२॥
"भार्या ह्यर्धं शरीरस्य" भार्या मूलं तरिष्यतः ।
भार्या मूलं त्रिवर्गस्य इति धर्मानुशासनम् ॥२३॥
परं यदि भविष्यन्ति भार्या एवमशिक्षिताः ।
कथं त्रिवर्गसिद्धिः स्यात् परितोषोऽथवाऽत्मनः ॥२४॥

---

३—अवलोक्यतां बृहदारण्यकोपनिषदः चतुर्थाध्यायस्य पञ्चमे ब्राह्मणे याज्ञवल्क्य-मैत्रेयी संवादः तथा शङ्करदिग्विजयस्य नवमः सर्गश्च ।

४—पालिभाषानिबद्धं बौद्धपुस्तकं यस्मिन् तदानीन्तनानां बौद्धशिक्षित-महिलानां कथा वर्तन्ते ।

५—"संस्कारो ह्यात्मनि समवैति न स्त्रैणं पौरुषं वा विभागमपेक्षते । श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्रदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहतबुद्धयः कवयश्चेति" ।

—काव्यमीमांसा, दशमोऽध्यायः

पतिरेको गुरुः स्त्रीणामिति शास्त्रेषु घोषितम् ।
निर्वाहयति किं कश्चित् परमेतद्वचो बुधः ॥२५॥
न जीवने भवद्भिश्चेद् एकः श्लोकोऽपि शिक्षितः ।
भार्याभ्यो निष्फला नो किं भवच्छास्त्रज्ञताऽखिला ॥२६॥
वदन्तु संस्कृते किञ्चित् प्रियाभिः सह पण्डिताः ।
इति मे मानसे वाञ्छा समुदेति निरन्तरम् ॥२७॥
परमेतादृशोऽल्पोऽपि व्यवहारो मनोहरः ।
महामहोपाध्यायानामपि गेहे न दृश्यते ॥२८॥
आसन् मण्डनमिश्रस्य गेहे दास्योऽपि शिक्षिताः ।
कीराङ्गनाऽपि वक्ति स्म श्रुत्वा संस्कृतभारतीम्[1] ॥२९॥
परन्तु साम्प्रतं केन विदुषा केन शास्त्रिणा ।
शिक्षिता निजगेहस्य दासी वापि शुकोऽपि वा ॥३०॥
आसीन्मण्डनमिश्रस्य भारती नाम वल्लभा ।
शङ्कराचार्यवर्योऽपि यया वादे पराजितः[2] ॥३१॥
अद्यापि सन्ति भूयांसो भारते मिश्रपण्डिताः ।
न भारतीसमा भार्या परं कस्यापि लभ्यते ॥३२॥
इयं नारीसमाजस्योपेक्षा संस्कृतशिक्षणे ।
संस्कृतेः संस्कृतस्यापि प्रचारेऽतीव बाधिका ॥३३॥
यदि स्युर्निखिला नार्यः संस्कृतज्ञानसंयुताः ।
शैशवादेव तासां स्युर्बालाः संस्कृतवेदिनः ॥३४॥
मातरः पितरो बाला बालिकाश्चापि संस्कृतम् ।
परस्परं वदेयुश्चेत् प्रचारो मे महान् भवेत् ॥३५॥

---

१—अवलोक्यतां शङ्करदिग्विजयस्य अष्टमः सर्गः ।

२—अवलोक्यतां शङ्करदिग्विजयस्य नवमे सर्गे श्रीमच्छङ्कराचार्याणां भारत्याश्च अद्भुता मनोरमा च शास्त्रार्थचर्चा । यथा—

अथ सा कथा प्रववृते स्म तयोरुभयोः परस्परजयोत्सुकयोः ।
मतिचातुरीरचित-शब्दझरी-श्रुतिविस्मयीकृतविचक्षणयोः ॥

"भोजनं देहि मे मातः, पितः शिक्षय मामिदम्"[२] ।
एवं बाला यदि ब्रूयुस्तदा स्यां मुदिता भृशम् ॥३६॥
अतः स्वकन्याभार्याणामपि संस्कृतशिक्षणे ।
ध्यानं देयं विशेषेण भवद्भिर्मद्धितैषिभिः ॥३७॥
अधिकाऽसम्भवे न्यूनान्न्यूनं श्लोकाः शतं बुधैः ।
शिक्ष्या नीतिसदाचार-पूजा-पाठ-निबन्धनाः ॥३८॥
एवमेव गृहे नित्यं गृहिणीभिः समं बुधैः ।
वार्तालापेषु वक्तव्यं नूनं किमपि संस्कृतम् ॥३९॥
कामं वृद्धा बुधा एवं नो कुर्युश्चेन्न मे क्षतिः ।
परं यूनामयं दोषो नूनं मां बाधतेतमाम् ॥४०॥

अतः—

"प्रिये प्रियतमे कान्ते दयिते प्राणवल्लभे ।
कल्याणिनि शुभे भद्रे आर्ये श्रीमति सुन्दरि" ॥४१॥
सम्बोधनपदैरेभिर्युवानो यदि पण्डिताः ।
युवतीभिः समं प्रीत्या पत्नीभिः प्रतिवासरम् ॥४२॥—
"पानीयं पातुमिच्छामि, किञ्चिन्मे देहि भोजनम् ।
शीघ्रमागम्यतामत्र, विलम्बः क्रियते कथम् ॥४३॥
अलमेतावता मुग्धे, शोभनं किमतः परम् ।
कथमद्य नु पश्यामि म्लानं तव मुखाम्बुजम् ॥४४॥
शय्या सुसज्जीक्रियताम्, उपधानं क्व वर्तते ।
विश्रामं कर्तुमिच्छामि, स्वास्थ्यमद्य न शोभनम् ॥४५॥
शृणोषि न वचो किं मे, किं कार्यं क्रियतेऽधुना ।
पश्य को नु समायातः, कपाटः पिहितो न वा ॥४६॥
कुञ्चिका वर्तते कुत्र, विस्मृतं किं त्वया शुभे ।
उद्घाट्य पेटिकां देहि शेखरं वा मनोरमाम् ॥४७॥

---

२—एतादृशवाक्यानां सङ्ग्रहः कार्यालयप्रकाशिते "बालसंस्कृतम्" इतिनामके पुस्तकेऽवलोकनीयः शिक्षणीयश्च बालेभ्यः ।

कानि वस्तूनि वर्तन्ते, आनेतव्यानि कानि च ।
शाकं वद किमानेयं आलूकं वा पटोलकम् ॥४८॥
लवणं देहि मे किञ्चित् द्विदले प्रतिभाति नो ।
लेह्ये मरिचमत्युग्रं न देयं, रोचते न मे ॥४९॥
सत्यं सत्यं वदाम्येतत् परिहासो न मन्यताम् ।
प्रिये मा कुरु सङ्कोचं, स्पष्टं वद मनोगतम् ॥५०॥
वाक्यानीत्येवमादीनि लघूनि सरलानि च ।
वक्तव्यानि विसङ्कोचं प्रियाभिः सह पण्डितैः ॥५१॥
उच्चकक्षास्थितैश्छात्रैरपि नाम विवाहितैः ।
पत्नीभिः सह संलापः कार्यं एवं मनोरमः ॥५२॥

यदि निजकुलगौरवेऽनुरागो
यदि च ममाऽभ्युदयोदये स्पृहा वः ।
कलयत ननु संस्कृते प्रवीणा
निजवनिता निजकन्यकाश्च सर्वाः ॥५३॥

## चतुर्थः सन्देशः

( विदेशेषु संस्कृतप्रचारस्य कृते चिन्ताया
उत्साहस्य चाभावमुद्दिश्य )

इदमप्यपरं कष्टं ज्ञेयं यद् बुधमण्डले ।
विदेशे मत्प्रचारस्य कापि चिन्ता न विद्यते ॥१॥
आसीत् पूर्वं विदेशेऽपि प्रचारः सुमहान् मम ।
इतिहासविदामेतत् तत्त्वं नास्ति तिरोहितम् ॥२॥
कोरिया-चीन-जापान-वर्मा-लङ्कादिभूमिषु ।
चम्पा-मलय-कम्बोज-श्यामदेशेषु तिब्बते ॥३॥
सुमात्रा-बोर्नियो-बाली-जावादौ हिन्दचीनके ।
तुर्किस्तानेऽथ खोताने तुरफाने तथैव च ॥४॥
एषु देशेषु सम्प्राप्तैः शिलालेखादिवस्तुभिः ।
तत्समैः तद्भवैः शब्दैः पालीसंस्कृतपुस्तकैः ॥५॥

तथा धार्मिकचिह्नैश्च स्पष्टमेव प्रतीयते[1] ।
विदेशेष्वपि मे भूयान् प्रचारः समभूदिति ॥६॥
परं सम्प्रति देशेषु तेषु मे कीदृशी स्थितिः ।
इति वेत्तुमहो कोऽपि पण्डितः किमु चेष्टते ॥७॥
अस्माभिस्तत्र गन्तव्यं प्रचार्या सुरगीस्तथा ।
कष्टं सोढ्वाऽपि, चिन्तैषा स्वप्नेऽपि किमु जायते ॥८॥
बालिप्रभृतिदेशेषु पूजापाठादिकर्मणि ।
अद्यापि देववाणीयं किञ्चिद् भ्रष्टा प्रयुज्यते ॥९॥
बौद्धाः पदण्डनामानः पुरोहितपदे स्थिताः ।
अनेकान् संस्कृतश्लोकान् उपयुञ्जन्ति नित्यशः[2] ॥१०॥
सिंहल-श्याम-प्रभृतिदेशेष्वद्यापि सर्वतः ।
भूयान् संस्कृतशब्दानां प्रयोग उपलभ्यते[3] ॥११॥
अथ संस्कृतशब्दानां भाष्यकारः पतञ्जलिः ।
प्रयोगविषयं प्राह भूतलेऽत्यन्तविस्तृतम्[4] ॥
संस्कृतं सुप्रचार्येत भूयो देशेषु तेषु चेत् ।
भवेयुर्बहवो लाभा नूनं भारतवासिनाम् ॥१२॥

---

१ अवलोक्यताम् Hindu culture in greater India (स्वामी सदानन्द प्रणीतम्), India and the Pacific world (डा० कालिदासनाग प्रणीतम्), प्राचीन भारतीय अभिलेखों का अध्ययन (डा० वासुदेव उपाध्याय प्रणीतम्), तथा बृहत्तर भारत का इतिहास (श्री भगवद्दत्तप्रणीतम्)

२—यथा—बालिद्वीपग्रन्थाः इतिनामके (बडौदास्थ-गायकवाड ग्रन्थमाला-प्रकाशिते) ग्रन्थे प्रदर्शितम् ।

३—अवलोक्यताम्–Sanskrit in Indonesia (by Dr. gonda), भारतीय आर्यभाषा और हिन्दी (डा० श्री सुनीतिकुमार चटर्जी प्रणीतम्), तथा श्यामदेशीय संस्कृत शब्द सूची (उत्तर प्रदेशीय शासन द्वारा प्रकाशिता) ।

४—व्याकरणमहाभाष्यम् १।१।पश्पशाह्निकम् ।

अतः संस्कृतविद्वद्भिर्लब्ध्वा व्याख्यानपाटवम् ।
आङ्ग्लभाषां तथाऽभ्यस्य त्यक्त्वाऽधर्मभियं तथा ॥१३॥—
तेषु तेषु विदेशेषु यात्रा यदि विधीयते ।
आत्मानं खलु मन्येयं धन्यां सौभाग्यशालिनीम् ॥१४॥
स तु मे साधुवादार्हो मधुसूदनझा बुधः ।
पण्डितेनापि येनादौ विदेशे गमनं कृतम् ॥१५॥[1]

अथ च—

इदानीमन्यदेशेषु नानारूपैः प्रयोजनैः ।
हिन्दवो बहुसंख्यायां निवसन्ति कुटुम्बिनः ॥१६॥
भारतेनाऽधुना लब्धे स्वातन्त्र्ये गौरवास्पदे ।
तेऽपि संस्कृतिमीहन्ते सत्कर्तुं पुनरात्मनः ॥१७॥
तेषु तेषां कुटुम्बे च धर्मरक्षण हेतवे ।
अस्ति संस्कृतशिक्षायाः प्रचारो बहुलाभकृत् ॥१८॥
परं तेषु बहोः कालाद् विदशस्थेषु बन्धुषु ।
संस्कृतस्य प्रचाराय वीतनिद्रा नु के बुधाः ॥१९॥
पाकिस्तानेऽधुना जाता मम कीदृक् परिस्थितिः ।
इति वेत्तुं कति व्यग्राः सन्ति पण्डितमण्डले ॥२०॥
स तु मे धन्यवादार्हः के० एम्० मुन्शीमहोदयः ।
प्रवर्तनं कृतं येन विश्वसंस्कृतसंसदः ॥२१॥
मन्येऽनया परिषदाऽवश्यमेव करिष्यते ।
योजना मत्प्रचाराय विदेशेष्वपि काचन ॥२२॥
किन्तु तेन न युष्माकं कर्तव्यमवसीयते ।
पण्डितैरपि कर्तव्या चिन्ता तत्कार्यपूर्तये ॥२३॥
गच्छेयुर्यदि विद्वांसो विदेशस्थेषु बन्धुषु ।
अर्थलाभोऽपि जायेत प्रचारेण समं महान् ॥२४॥

---

१—श्रीमतां झामहोदयानां विदेशयात्राया रोचकं वृत्तं 'संस्कृतरत्नाकर पत्रस्य' झामहोदयेभ्यः समर्पिते अभिनन्दनाङ्के पठनीयम् ।

तस्माद् वीरैः बुधैः कैश्चित्तरुणैश्च विशेषतः ।
नूनं विदेशयात्रायाः संकल्पः क्रियतां दृढः ॥२५॥
अथ चापि विदेशेषु भूयांसः सन्ति तादृशाः ।
वैदेशिका जना ये तु ख्याताः संस्कृतपण्डिताः ॥२६॥
संस्था अपि च भूयस्यः शिक्षायाः सन्ति सर्वतः ।
यासु संस्कृतभाषाया विभागो वर्तते पृथक् ॥२७॥[1]
एते सर्वेऽपि सौहार्दं दर्शयेयुः सुनिश्चितम् ।
साहाय्यं चाऽपि कुर्वीरन् यदि यात्रा विधीयते ॥२८॥
गम्यतां दूरदेशेषु लभ्यतां विपुलं यशः ।
प्रचार्यतां पुनर्विश्वे भारतस्योज्ज्वलं यशः ॥२९॥
इदानीं दूरयात्रायाः सौविध्ये सुलभेऽखिले ।
विलम्बो नैव कर्तव्यो वीरैरुत्साहशालिभिः ॥३०॥

एकोऽपि पण्डितवरो यदि दूरदेशे
गत्वा करिष्यति मदुन्नतये प्रयत्नम् ।
आकल्पमस्य विदुषो बुधवृन्दमौले—
राभारभारवहनं शिरसा करिष्ये ॥३१॥

---

१—एतेषां परिज्ञानार्थं डा० वी० राघवन् महोदयैः लिखितं "Sanskrit and Allied Indological Studies in Europe" इति पुस्तकमवलोकनीयम् ।

वैदेशिकानां संस्कृत विदुषां चित्राण्यपि द्रष्टुं समीहा चेत् "ओरिएन्टल बुक एजेन्सी, पूना" द्वारा प्रकाशितं "Picturesque Orientalia" नामकं पस्तकमवलोकनीयम् ।

# अध्ययनाऽध्यापन-विषयकम्
## तृतीयं प्रकरणम्
### प्रथमः सन्देशः
( अध्ययनाऽध्यापनपद्धतिगतान् दोषानुद्दिश्य )

पद्धतिः पाठनस्यापि नितान्तं दूषिताऽधुना ।
वर्तते पाठशालासु प्रथमाया विशेषतः ॥१॥
पाठशालाप्रविष्टेभ्यश्छात्रेभ्यो लघुकौमुदी ।
सर्वादौ पाठ्यते यत्तु तदनर्थकरं महत् ॥२॥
पूर्वं भाषा शिक्षणीया तस्या व्याकरणं ततः ।
एष शिक्षाविधिः प्रोक्तः शिक्षाशास्त्रविशारदैः ॥३॥
परन्तु पाठशालासु प्रायः सर्वासु पण्डितैः ।
एतद्विधिविरुद्धैव रीतिः सञ्चाल्यतेऽधुना ॥४॥
भाषाज्ञानं विनारभ्य प्रथमं लघुकौमुदीम् ।
सुकुमारेषु छात्रेषु वज्रपातो विधीयते ॥५॥
वज्रपातेन चानेन आदावेव हतप्रभाः ।
कुण्ठिताश्च भवच्छिष्या न रोहन्ति पुनर्द्रुतम् ॥६॥
अनयैव भिया भीता बहवो हन्त बालकाः ।
पठितुं पाठशालासु नेच्छन्ति प्रेरिता अपि ॥७॥
अनेके च पठन्तोऽपि तत्काठिन्येन पीडिताः ।
इदानीं पठनं त्यक्त्वा अन्यत् कार्यं प्रकुर्वते ॥८॥
प्रौढा अपि जना नैके संस्कृताध्ययनेप्सवः ।
अस्मादेव भयात् प्रायः प्रवर्तन्ते न शिक्षणे ॥९॥
अत एवाऽधुना नैके विद्वांसः संस्कृतप्रियाः ।
संस्कृतव्याकृतेः प्रायो विरोधं खलु कुर्वते[1] ॥१०॥

---

१ अवलोक्यताम् Indian Inheritance नाम्नि पुस्तके सरदार के० एम० पणिक्कर महोदयस्य लेखः ।

अतो रीतिमिमां त्यक्त्वा शिष्याणां हानिकारिणीम् ।
शिक्षा नवीनया शैल्या देया शिष्यहितैषिभिः ॥११॥
पाठशालाप्रविष्टेभ्यश्छात्रेभ्यो निखिलैर्बुधैः ।
सर्वादौ कतिचिन्मासान् भाषाज्ञानं प्रदीयताम् ॥१२॥
शब्दधात्वव्ययादीनि कालकारकपूर्वकम् ।
अध्याप्य प्रथमं कार्यम् अनुवादस्य शिक्षणम् ॥१३॥
अनेन विधिना जाते प्रवेशे खलु वाङ्मये ।
पश्चाद् व्याकरणादीनां शिक्षणं शोभनं भवेत् ॥१४॥
रीतेरस्या अभावेनाऽनुवादस्याऽप्यशिक्षणात् ।
अप्रयोगाच्च बालानां भाषाज्ञानं न वर्द्धते ॥१५॥
अनुवादप्रबन्धादेः शिक्षणे तस्य लेखने ।
संशोधने च विद्वद्भिः सम्यक् ध्यानं न दीयते ॥१६॥
ग्रन्थानां पाठने यादृग् भवतां दृश्यते रुचिः ।
अनुवाद-प्रबन्धादि-शिक्षणे न तथा क्वचित् ॥१७॥
प्रेरिताः प्रार्थिताश्चापि तदर्थं बहुपण्डिताः ।
अज्ञानादथवाऽलस्यादुपेक्षन्ते सदैव तत् ॥१८॥
अनेनैव हि दोषेण भवतां शिष्यसन्ततौ ।
न व्युत्पत्तिर्न भाषायामधिकारः प्रजायते ॥१९॥
उषित्वा बहु वर्षाणि रटित्वा च दिवानिशम् ।
व्ययित्वा विपुलं द्रव्यं छात्रास्तिष्ठन्ति मूकवत् ॥२०॥
अतः पाठनवत् पूर्णा दृष्टिरत्रापि दीयताम् ।
आत्मन्येव त्रुटिश्चेत् स्यात् सापि दूरे विधीयताम् ॥२१॥

अथ च—

ग्रन्थानामपि सर्वेषां कर्तव्यं पाठनं तथा ।
यथा यथार्थतस्तत्स्यात् छात्राणां लाभकारकम् ॥२२॥
अधुना तु यया शैल्या क्रियते ग्रन्थपाठनम् ।
न तया छात्रवर्गस्य कश्चिल्लाभो विलोक्यते ॥२३॥

समाप्य कौमुदीं सर्वामुत्तीर्य च परीक्षणम् ।
लेखने भाषणे शश्वदशुद्धीस्ते प्रकुर्वते ॥२४॥
पीत्वाऽपि सकलं छात्रा रसवत्तर्कसंग्रहम् ।
न तर्ककरणे शक्ता विलोक्यन्ते कदाचन ॥२५॥
पञ्चतन्त्रं पठित्वापि सम्पूर्णं नीतिपुस्तकम् ।
न नीतिनिपुणाश्छात्रा व्यवहारविदोऽथवा ॥२६॥
पञ्चतन्त्रफलञ्चैकं, "पाटवं संस्कृतोक्तिषु" ।
विष्णुशर्मा स्वयं प्राह परं तद् दृश्यते नु किम् ॥२७॥
पठन्ति सकलाश्छात्राः छन्दसां लक्षणान्यहो ।
परं सम्यक्तया श्लोकान् पठितुं पारयन्ति नो ॥२८॥
येषां श्रुत्वा पद्यपाठं प्रसीदति मनो भृशम् ।
शिष्या वा गुरवो वापि तादृशा बहुदुर्लभाः ॥२९॥
आचारः संस्कृतिर्धर्मो देशकालदशादिकम् ।
काव्याध्ययनतो ज्ञेया सर्वा तात्कालिकी स्थितिः ॥३०॥
परं संस्कृतशालासु छात्राणां विदुषां तथा ।
स्वप्नेऽपि विषयेष्वेषु कष्टं दृष्टिर्न गच्छति ॥३१॥
काव्यव्याख्या च घोषित्वा कण्ठस्थीक्रियते यदि ।
काव्यामृतरसास्वादः कथं नु सुलभो भवेत् ॥३२॥
पठन्ति कतिचिच्छात्रा वेदान्तमपि साम्प्रतम् ।
गीतोपनिषदश्चापि केचित् संन्यासिनो जनाः ॥३३॥
परन्तु जीवने तेषां छात्राणामीषदप्यहो ।
विचार-व्यवहाराभ्यां वेदान्तित्वं न भासते ॥३४॥
पठन्ति बहवश्छात्रा नाटकानि बहूनि च ।
परं तेषु न पश्यामस्तादृशीं वाग्विदग्धताम् ॥३५॥
एवं ग्रन्थस्य कस्यापि पठनेन यथार्थतः ।
नाऽस्वादो लभ्यते छात्रैर्नापि ज्ञानं प्रजायते ॥३६॥
प्रायशः पाठशालासु घोषणस्यैव मुख्यता ।
वर्तते तेन शिष्याणां बुद्धिवृद्धिर्न जायते ॥३७॥

अर्थज्ञानं विना छात्रा रटित्वा तर्कसंग्रहम् ।
परीक्षा ददते दैवात् समुत्तीर्णा भवन्ति च ॥३८॥
प्रारम्भे लघुकौमुद्या बहवो मूकबालकाः ।
घोरे "घोषणिडका" गर्ते पीड्यन्ते पण्डितैर्जनैः ॥३९॥
श्रमेण महता छात्राः प्रयोगान् साधयन्त्यहो ।
परं तेषां प्रयोगाणामर्थं जानन्ति नैव ते ॥४०॥
एवं वैदिकशिक्षायामपि वेदार्थवर्जनात् ।
स्थाणवो भारवाहा हा जाता वैदिकमानवाः ॥४१॥❀
एवं संस्कृतशिक्षाया मन्दिरे सुचिरादहो ।
घोषणाख्या पिशाचीयं प्राधान्येन विराजते ॥४२॥
एषा च बहुबालानां रक्तास्वादनलोलुपा ।
पाठशालाः परित्यक्तुं शीघ्रं नाद्यापि वाञ्छति ॥४३॥
अहो संस्कृतशिक्षायाः दौर्भाग्यं खलु कीदृशम् ।
अर्थज्ञानात्मिका दृष्टिः विनष्टा यदियं चिरात् ॥४४॥
निमील्य नयने स्वीये देहान्दोलनपूर्वकम् ।
केवलं रटने याति छात्राणां समयोऽधिकः ॥४५॥
न केवलं छात्रजनाः पण्डिता अप्यनेकशः ।
अर्थज्ञानमुपेक्षन्ते शब्दपाठपरायणाः ॥४६॥
अर्थज्ञानं विना वेदमन्त्राणां सकलाः क्रियाः ।
कुर्वन्तः कारयन्तश्च दृश्यन्ते वैदिका बुधाः ॥४७॥
अर्थज्ञानं विना सन्ध्या प्रायः सर्वैर्विधीयते ।
अर्थज्ञानं विना प्रायः पठ्यते स्वस्तिवाचनम् ॥४८॥
अर्थज्ञानं विना पूजा अर्थज्ञानं विना कथा ।
अर्थज्ञानं विना पाठः प्रायशो दृश्यतेऽभितः ॥४९॥
यादृक् संस्कृतशिक्षायामर्थापेक्षा निरीक्ष्यते ।
रटनस्य च मुख्यत्वं तत् त्रैलोक्येऽपि दुर्लभम् ॥५०॥

---

❀ यथाऽह निरुक्ते आचार्यः—
स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजानाति योऽर्थम् ।

अनेनैव च पापेन शापेनापि तथा गिरः ।
निष्फलं संस्कृतज्ञानां जायतेऽध्ययनं खलु ॥५१॥
अत एवाखिलाश्छात्रा जायन्ते भवतां बुधाः ।
हेतवो मम निन्दायामयोग्यत्वे तथात्मनः ॥५२॥
वस्तुतो यत्स्वरूपेयं शिक्षा सम्प्रति दीयते ।
न तया साम्प्रतं कश्चिल्लाभः पुंसां विलोक्यते ॥५३॥
चौर्येण छलजालाभ्यां गुरूणां धावनेन च ।
समुत्तीर्णा परीक्षा चेत्तया लाभः कियान् भवेत् ॥५४॥
नेयमाध्यात्मिकी शिक्षा आर्थिकी धार्मिकी न वा ।
न वाऽनन्दकरी पुंसां केवलं कालयापिनी ॥५५॥
अतो रीतिमिमां हित्वा सर्वेषां हानिकारिणीम् ।
शिक्षायाः सकलाङ्गेषु महाक्रान्तिर्विधीयताम् ॥५६॥

परीक्षणे वा पठनेऽथ पाठने
प्रवर्तमानां परिवर्त्य पद्धतिम् ।
तथा प्रयत्नो विबुधैर्विधीयतां
यथास्तु शिक्षा सकलार्थसाधिका ॥५७॥

## द्वितीयः सन्देशः

( अध्ययनाऽध्यापनादिषु अनुसन्धानात्मिकायाः
विवेचनात्मिकायाश्च प्रवृत्तेरभावमुद्दिश्य )

इदञ्चापि न मे न्यूनं क्लेशकृन्मन्यतां बुधाः ।
आलोचनात्मिका दृष्टिः शिक्षणे यन्न विद्यते ॥१॥
आलोचनात्मिका दृष्टिः जिज्ञासाश्चा नवा नवाः ।
प्रविश्य विषयज्ञानं शिक्षायाः कथिता गुणाः ॥२॥
परं संस्कृतशिक्षाया वर्तमाने क्रमेऽधुना ।
नैते गुणा विलोक्यन्ते शब्दार्थरटनादृते ॥३॥

आलोचनीया विषया वर्तन्तेऽद्यापि भूरिशः* ।
परन्तु विदुषां दृष्टिः प्रायस्तेषु न गच्छति ॥४॥

तथा हि—

स्वयं संस्कृतभाषाया उत्पत्तिविषये महान् ।
संशयो विद्यतेऽद्यापि ननु पण्डितमण्डले ॥५॥
"संस्कृतात् प्राकृतं जातं प्राकृताद्वा नु संस्कृतम् ।
संस्कृतं लोकभाषासीन्नवा देशे कदाचन ॥६॥
दैवी भाषेति नामास्या अभवत् केन हेतुना ।
संस्कृतं वापि नामैतत् कदा कथमजायत" ॥७॥
एतस्मिन् विषये प्रायो ज्ञानं किमपि निश्चितम् ।
बहुपण्डितवर्याणामपि नैवाऽवलोक्यते † ॥८॥

---

* अवलोक्यन्ताम् "संस्कृत रत्नाकर" पत्रस्य शिक्षाङ्के प्रकाशितो निबन्धसमूहः, संस्कृतसाहित्यसम्मेलनस्य निबन्धावली तथा डा० सम्पूर्णानन्दमहोदयानां संस्कृतसम्बन्धिनो लेखा भाषणानि च ।

† अस्मिन् विषये निम्नाङ्किता निबन्धा अवलोकनीयाः—

१—संस्कृतसाहित्यसम्मेलनस्य निबन्धावली [ महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदिमहोदयैः सम्पादिता ]

२—वेदधर्मव्याख्यानम्, पञ्चमो भागः, [ विद्यावाचस्पति श्री मधुसूदन झामहोदयैः प्रणीतम् ]

३—संस्कृत रत्नाकरः [ जयपुर ] फरवरी १९३८, पृ० ५९

४—संस्कृतम् ( अयोध्या ) २७-३-१९४५ ई० ।

५—मैथिली साहित्य [ मैथिलीभाषानिबद्धं पुस्तकम् ] पृ० ८० ।

६—राष्ट्रभाषा की परम्परा [ श्री चन्द्रबली पाण्डेय एम० ए० द्वारा लिखितो निबन्धः ] ।

७—काशिकराजकीय-संस्कृतमहाविद्यालयस्य पञ्चमदीक्षान्तभाषणम् ।

८—संस्कृतसाहित्येतिहासग्रन्थानां भूमिकाः ।

९—The age of Panini and sanskrit as a spoken language. By. DR. K. B, pathak [ भाण्डारकर इन्स्टीट्यूट पत्रिका, अक्टूबर १९२९ ई० ]

जैना बौद्धास्तथा नव्या भाषाविज्ञानपण्डिताः ।
प्राकृतादेव मन्यन्ते संस्कृतस्य समुद्भवम्[1] ॥९॥
बहुभिर्मन्यते श्रौती भाषा सर्वपुरातनी ।
परं कैश्चित्ततोऽप्याद्या काचिद् भाषाऽनुमीयते[2] ॥१०॥
संस्कृतं लोकभाषासीदवश्यमिति भूयसाम् ।
पण्डितानां मतं मन्ये ज्ञानाद्वा श्रद्धयाऽपि वा ॥११॥
अपरे च पुनः केचिद् विश्रुता एव पण्डिताः ।
संस्कृतं नहि मन्यन्ते लोकभाषां कथञ्चन* ॥१२॥
अतएव च सर्वेषां पुंसां संस्कृतसद्मनि ।
प्रवेशस्याधिकारं ते मन्यन्ते नैव धर्मतः ॥१३॥
एवञ्च विषयेष्वेषु बहूनां विदुषां मया ।
विचारा विविधा दृष्टाः परस्परविरोधिनः ॥१४॥
परं संस्कृतसम्बन्धे तज्ज्ञानामेव धीमताम् ।
ईदृशं खलु वैमत्यं विरोधो वा न शोभते ॥१५॥
अतः संस्कृतविद्वद्भिर्विषयेऽस्मिन् सयुक्तिकम् ।
सम्यगध्ययनं कृत्वा कर्तव्यः कोऽपि निर्णयः ॥१६॥

एवमेव—

गणपाठे धातुपाठे तथोणादिगणेऽपि च ।
बहवो धातवः शब्दा एवम्भूता मिलन्ति वै ॥१७॥

---

१—अस्मिन् विषये पालीभाषायाः प्राकृतभाषायाश्च साम्प्रतिकानां व्याकरण-ग्रन्थानां कोशग्रन्थानाञ्च भूमिका अवलोकनीयाः ।

२—यथा डा० श्री सुनीतिकुमार चटर्जी महाशयैः "भारतीय आर्य भाषा और हिन्दी" इति ग्रन्थे सप्ततितमे पृष्ठे प्रतिपादितम् ।

* यथा—

१—अ० भा० हिन्दीसाहित्यसम्मेलनस्य षट्त्रिंशत्तमे अधिवेशने दर्शनपरिषदः अध्यक्षस्य भाषणम् ।

२—सन्मार्ग दैनिक [ वाराणसी ] १४ दिसम्बर १९६१ ।

३—पण्डितपत्रिका [वाराणसी] १६, २३ मार्च १९५३; १३ जुलाई १९५३

येषां स्वरूपे चार्थे च व्युत्पत्तावपि संशयः ।
सुमहान् वर्ततेऽद्यापि सुमहापण्डितेष्वपि ॥१८॥
परन्तु तेषां शब्दानां धातूनाञ्चाथ निर्णये ।
स्वरूपनिर्णये वापि भवन्तो नैव तत्पराः ॥१६॥
अस्मिन् सूत्रे त्वयं न्यासः कर्तव्य इति वादिभिः ।
अद्यपर्यन्तमेकोऽपि न्यासः कर्तुं न पारितः ॥२०॥
तथाप्यद्यापि विद्वांसो न्यासचर्चापरायणाः ।
परन्त्वावश्यके कार्ये तेषां ध्यानं न विद्यते ॥२१॥

तथा हि—

सूत्राणि धातुपाठश्च नामलिङ्गानुशासनम् ।
गणपाठः कृदन्तश्च दशपादी-समन्वितः ॥२२॥
एतत् पञ्चकमाख्यातं शब्दशास्त्रस्य वैभवम् ।
स्वायत्तीकृत्य यद् विद्वान् शाब्दिकप्रवरो भवेत्[1] ॥२३॥
परं साम्प्रतिके हंहो वैयाकरणमण्डले ।
कति वा गुरवः शिष्याः पञ्चकेऽस्मिन् कृतश्रमाः ? ॥२४॥
स तु धन्यो महाविद्वान् मीमांसक-युधिष्ठिरः ।
धीमान् कपिलदेवश्च श्रीरामावधपण्डितः ॥२५॥
यैरेषु विषयेष्वेव जीवनं निजमर्पितम् ।
सहमानैस्तथा कष्टं कृतो भूयान् परिश्रमः ॥२६॥
शवतिर्गतिकर्मास्ते काम्बोजेष्विति भाष्यकम् ।
पाठयन्ति बुधाः सर्वे स्वस्वविद्यार्थिनोऽनिशम् ॥२७॥
पर के नाम कम्बोजाः शवतिस्तत्र साम्प्रतम् ।
प्रयुज्यते न वेत्यत्र विद्वांसः शिथिलादराः ॥२८॥
अथ पाणिनिसूत्रेषु नगर-ग्राम-वाचिनः ।
वर्तन्ते बहवः शब्दास्तथा देशादिवाचिनः ॥२९॥

---

१—यथोक्तं पालीभाषाया मोग्गलानथेरोविरचिते व्याकरणे—
सुत्तधातुगणोण्वादिनामलिङ्गानुशासनम् ।
यस्स तिट्ठति जिह्वग्गे सो व्याकरणकेशरी ॥

परं देशादयस्ते ते कुत्रासन् साम्प्रतञ्च ते ।
किन्नामानः क्व वर्तन्ते इति जानन्ति किं बुधाः ॥३०॥
सर्वेषामपि शब्दानां प्रयोगस्योपलब्धये ।
भाष्यकारोऽवदद् भाष्ये प्रयत्नः क्रियतामिति ॥३१॥
परं वाक्यमिदं शश्वत् पाठयन्तोऽपि पण्डिताः ।
ईहन्ते प्रयतन्ते का तदर्थं चेतसा क्वचित् ? ॥३२॥
शतशो धातवः प्रोक्ता एकस्यार्थस्य वाचकाः ।
एकैके धातवस्तद्वद् अनेकार्थस्य बोधकाः ॥३३॥
बहूनामथ धातूनां स्वरूपविषये पुनः ।
अपि टीकाकृतोऽनेके वर्तन्ते भ्रान्तिसंयुताः ॥३४[1]॥
अथ केचिन्नवाचार्या भाषाविज्ञानवेदिनः ।
धातुप्रत्ययसम्बन्धे कुर्वते तर्कणा नवाः ॥३५॥[2]
उणादिसिद्धशब्दानां व्युत्पत्तौ साधने तथा ।
अनेकोणादिकाराणां सन्देहो वर्तते स्वयम् ॥३६॥[3]

---

यथा—

१—पूर्ण इत्येके । पुणेत्यन्ये । ईदृशेषु पाठशुद्धिर्निर्णेतुमशक्या ।

अतएव क्षीरस्वामिनोक्तम्—

पाठेऽर्थे चागमभ्रंशात् महतामपि मोहतः ।
न विद्मः किं जिहीमोऽत्र किं वोपादद्महे वयम् ॥

पुलपूर्णादिषु पाठे भ्रंशः, वजधातोर्मार्गसंस्कारोऽर्थः उत संस्कार एवेत्यर्थे भ्रंशः । आगमभ्रंशात् शास्त्रभ्रंशात् ।

चुरादौ सिद्धान्तकौमुद्यास्तत्त्वबोधिनी ।

२—विषयेऽस्मिन् स्वर्गीयपण्डितप्रवरश्रीविधुशेखरभट्टाचार्यमहोदयानां संस्कृतशिक्षाविषयका लेखा अवलोकनीयाः ।

३—यथा प्रक्रियासर्वस्वकारेण नारायणभट्टेन उक्तम्—

अस्माद्धातोरियं संज्ञा साध्येति मुनिशासने ।
किं कुर्मोऽर्थान्वयः कश्चिल्लब्धश्चेत् कृतिनो वयम् ॥

विषयेष्वेषु सर्वेषु प्रयोगार्थादिनिर्णये ।
तात्त्विकञ्चाथ गम्भीरं गवेषणमपेक्ष्यते ॥३७॥
परं त्वरयतां दुर्गापाठवद् धातुपाठने ।
विदुषां विषयेष्वेषु ध्यानं किं क्वापि गच्छति ॥३८॥
द्वीपदेशादिसम्बन्धे पुराणेषु यदङ्कितम् ।
तत्र भूयान् भ्रमो भाति महतां विदुषामपि ॥३९॥
परं तस्यार्थसङ्गत्यै याथार्थ्यस्य च लब्धये ।
कियद्भिः पण्डितैः प्रीत्या क्रियते नु परिश्रमः ॥४०॥
काव्यादिषु च ये शब्दाः सन्ति भूगोलवाचिनः ।
पशुपक्षि-लतापुष्प-वेषभूषादि-बोधकाः ॥४१॥
तेषामप्यर्थजिज्ञासा पण्डितेषु न दृश्यते ।
न तदर्थं यतन्ते ते कोशादीनां निरीक्षणे ॥४२॥
"कश्चिद् वृक्षविशेषोऽयं, मन्ये काचिदियं लता ।"
इत्येवं पण्डिताः पाठे स्वपाण्डित्यं वितन्वते ॥४३॥
विद्वांसः पाठशालायां प्रायः कोशेषु सत्स्वपि ।
आलस्यान्नैव पश्यन्ति स्वशिष्यान् वञ्चयन्ति च ॥४४॥
एवं सर्वासु विद्यासु सर्वेषु विषयेषु च ।
अनुसन्धानकार्यस्य वरीवर्ति प्रयोजनम् ॥४५॥
प्रायेण विषयेष्वेषु आङ्गलविद्याविशारदैः ।
देश्यैस्तथा विदेशीयैर्विज्ञैर्भूरि विवेचितम् ॥४६॥
अथ संस्कृतविद्याया विशुद्धैरपि पण्डितैः ।
बहवो नवया दृष्ट्या विषयाः प्रतिपादिताः ॥४७॥[1]

---

सदसद्वाऽपि यत्किञ्चिदुक्त्वा व्युत्पाद्यमित्यदः ।
टीकासर्वस्वकारादिवचनं शरणं हि नः ॥
—प्रक्रियासर्वस्वम् , पृ० २

१—यथा श्री पण्डितरामाज्ञाप्रसादपाण्डेयमहोदयैः स्वकीये "व्याकरण दर्शने" व्याकरणसम्बन्धिनः केचन नूतना विचारा उपस्थापिताः ।

परन्तु भवतामत्र प्रयत्नो नैव दृश्यते ।
न वाऽन्योद्धृततत्त्वानामुपयोगो विधीयते ॥४८॥
एवञ्चालोचनापूर्ण-शिक्षाशैल्या अभावतः ।
विवेचनात्मिका बुद्धिश्छात्रेष्वपि न जायते ॥४९॥
अतो दोषवतीमेनां हित्वा पाठनपद्धतिम् ।
शिक्षायां दीक्षितैर्ग्राह्या शैली बुद्धिविकाशिनी ॥५०॥
हिन्द्यां वाऽपरभाषासु सन्ति ये ये प्रकाशिताः ।
ग्रन्था आलोचनापूर्णा अनुसन्धानकोविदैः ॥५१॥
तेषामध्ययनं कृत्वा स्वबुद्ध्यापि विचार्य च ।[1]
पठनं पाठनं कार्यं विवेचनपुरस्सरम् ॥५२॥
भारतीसेवया ये ये लाभा उक्ता मनीषिभिः ।
लभ्येरन् ते यथा सर्वे तथा यत्नो विधीयताम् ॥५३॥

शब्दार्थावगमैकमात्रफलदां क्लेशप्रदां प्रायशो
विद्याबुद्धिवचोविवेकविमलद्वारे दृढामर्गलाम् ।
एतां शिक्षणपद्धतिं प्रचलितां निक्षिप्य दूरे द्रुतं
ग्राह्या बुद्धिविकासिनीयमधुना वैज्ञानिकी पद्धतिः ॥५४॥

## तृतीयः सन्देशः

( उच्चकक्षास्वपि संस्कृतभाषाया माध्यमेन अध्यापनाभावमुद्दिश्य )

इदं दृष्ट्वाऽपि मे तीव्रा जायते शिरसि व्यथा ।
यद् भवन्तो निजांश्छात्रान् संस्कृतेऽध्यापयन्ति नो ॥१॥
हित्वा संस्कृतभाषायां पाठनं बोधनं तथा ।
प्रायो ग्राम्यासु भाषासु पाठयन्त्यखिला बुधाः ॥२॥
प्रथमाया मध्यमायाः संस्कृतेऽध्यापनं न चेत् ।
शास्त्र्याचार्यपरीक्षासु आसीदावश्यकन्तु तत् ॥३॥

---

१—अवलोक्यताम् "संस्कृत के ग्रन्थ और उन पर आधुनिक आलोचनाएँ" नाम्नी पुस्तिका सार्वभौमसंस्कृतप्रचारकार्यालयद्वारा प्रकाश्यमाना ।

परं किं कथयाम्येतद् भवतां हन्त चेष्टितम् ।
यदाचार्यान्त्यखण्डेऽपि पाठ्यते देश्यभाषया ।।४।।
अत एव तु विद्वत्सु विद्यार्थिषु च संस्कृते ।
न च पाठयितुं शक्तिर्न च बोद्धुं प्रजायते ।।५।।
यदि धाराप्रवाहेण संस्कृतेऽध्यापनं भवेत् ।
छात्राश्च यदि बुध्येयुः पृच्छेयुश्चापि संस्कृते ।।६।।
तदा संस्कृतभाषाया ज्ञानं वर्द्धेत कीदृशम् ।
देववाणीमयं स्याच्च सम्पूर्णं वायुमण्डलम् ।।७।।
सर्वे शिष्यास्तथाऽऽचार्यास्तदा संस्कृतभाषणे ।
नितरां निर्भया भूत्वा व्यचरिष्यन् समन्ततः ।।८।।
परं न जाने विद्वांसः कस्य देवस्य शापतः ।
संस्कृतेऽध्यापने नैव प्रवर्तन्ते मनागपि ।।९।।
पण्डितानामनेनैव दुर्गुणेन महीयसा ।
वराका वहवश्छात्रा वहु दुःखानि भुञ्जते ।।१०।।
अशक्ता अखिलाश्छात्राः स्वयं संस्कृतलेखने ।
रटित्वा क्रोड़पत्राणि परीक्षा उत्तरन्ति हा ।।११।।
अतो हे पण्डिताः सर्वे छात्राणां हितकाम्यया ।
आत्मनश्चापि लाभार्थं रीतिरेषा विसृज्यताम् ।।१२।।
अध्यापनं यथाशक्यं कार्यं संस्कृतभाषया ।
कामं यत्र न बोधः स्यात्तत्र भाषा प्रयुज्यताम् ।।१३।।
सरलैः सरलैर्वाक्यैः सरलैः सरलैः पदैः ।
प्रकारैर्विविधैश्चापि बोध्या विद्यार्थिनः सुखम् ।।१४।।
"छात्रा एव न बुध्यन्ते संस्कृतेऽध्याप्यते यदि" ।
स्वदोषगोपनायैवं प्रायेण ब्रुवते बुधाः ।।१५।।
परन्तु पण्डिता मिथ्यावचनं न निगद्यताम् ।
यत्नादर्जन्तु सामर्थ्यं संस्कृतेऽध्यापनाय च ।।१६।।
यादृशी नु भवदीयवैदुषी सर्वशास्त्रविषयाऽवगाहिनी ।
तादृशी सुगम-रम्य-वाग्झरी संस्कृते नहि कथं वितन्यते ।।१७।।

## चतुर्थः सन्देशः

(शास्त्राणां प्रौढपाण्डित्यस्य दिने दिने ह्रासमुद्दिश्य)

अथेयमपि चिन्ता मे मनसो नापसर्पति ।
यन्मे गम्भीरपाण्डित्यं क्षयं याति दिने दिने ॥१॥
विद्यार्थिनोऽधुना ये तु पाठशालास्वधीयते ।
वैदुष्यस्यार्जने तेषां प्रवृत्तिर्नावलोक्यते ॥२॥
पण्डिता अपि ये केचिन्नवीनाः सन्ति साम्प्रतम् ।
तत्परा नहि दृश्यन्ते तेऽपि पाण्डित्यरक्षणे ॥३॥
अव्युत्पत्तेस्तथालस्यात् श्रमशक्तेरभावतः ।
परीक्षोत्तीर्णतामात्र—लक्ष्यत्वाच्च कथञ्चन ॥४॥—
नानापरीक्षोद्विग्नत्वाद् अर्थप्राप्तेरनिश्चयात् ।
अभावात् स्वाभिमानस्य स्वसाहित्यस्य रक्षणे ॥५॥—
प्रायेण कारणैरेभिः संस्कृतज्ञेषु साम्प्रतम् ।
उत्कण्ठा दृश्यते नैव प्रौढपाण्डित्यलब्धये ॥६॥
येन केन प्रकारेण पठित्वा पाठ्यपुस्तकम् ।
परीक्षां ददते छात्राः समुत्तीर्णा भवन्ति च ॥७॥
अस्मिन् काले तु ये केचिद् विद्वांसः सन्ति भारते ।
निष्णाताः स्वीयशास्त्रेषु दृष्ट्वा जीवामि तानहम् ॥८॥
परमेषामभावे तु कस्य दृष्ट्वाऽहमाननम् ।
आत्मानं धारयिष्यामि इति नैव प्रतीयते ॥९॥
अध्यापका इदानीन्तु भूयांसः सन्ति भारते ।
तेषां मध्ये बहूनान्तु जीविकाऽपि सुशोभना ॥१०॥
परं तेऽपि यतन्ते नो निजवैदुष्यवृद्धये ।
यथालब्धेन बोधेन तुष्टास्तिष्ठन्ति सर्वदा ॥११॥
गद्दिकासु समासीनाश्छात्राभावे तु पण्डिताः ।
मक्षिका मारयन्तो वै यापयन्ति दिनान्यहो ॥१२॥

परं नूतनग्रन्थानां दर्शने वाऽनुशीलने ।
नवज्ञानार्जने वापि प्रवर्तन्ते न ते क्वचित् ॥१३॥
केचित् कतिपयक्रोडपत्राणामेव घोषणम् ।
शास्त्रार्थञ्चापि मन्यन्ते पाण्डित्यपरमावधिम् ॥१४॥
नूतना ये च वर्तन्ते प्राध्यापकपदे बुधाः ।
नानाभाषेतिहासादि-प्रवीणा भूरिवेतनाः ॥१५॥
तेऽपि वाह्येतिहासाद्यालोचनास्वेव तत्पराः ।
विमुखा एव दृश्यन्ते गम्भीरज्ञानसङ्ग्रहे ॥१६॥
तत् कथं मे सुरक्षा स्यात् को वा मे हितचिन्तकः ।
इति चिन्ताविषण्णाहं सदा तिष्ठाम्यनाथवत् ॥१७॥
अतो मयि दयां कृत्वा तथा यत्नो विधीयताम् ।
यथा गभीरं पाण्डित्यं सर्वथा स्यात् सुरक्षितम् ॥१८॥

तथा हि—

येषां पण्डितवर्याणामस्ति पर्याप्तवेतनम् ।
ध्यानं देयं तु तैः सर्वैर्निजवैदुष्यवृद्धये ॥१९॥
राज्यद्वारापि दत्ता स्याद् यथा पर्याप्तजीविका ।
आचार्येभ्यो विशिष्टेभ्यस्तथा यत्नो विधीयताम् ॥२०॥
संन्यासिनः साधवश्च निवसन्ति मठेषु ये ।
निश्चिन्ताः सन्ति ते सर्वे परिवारस्य पालनात् ॥२१॥
अतस्ते न्याय-वेदान्त-मीमांसादिषु सर्वदा ।
प्रौढपाण्डित्यरक्षायै प्रवर्तन्तां यथाबलम् ॥२२॥
सर्वैर्मुख्यैर्मठाधीशैः मिलित्वा मन्त्र्यतां मिथः ।
को मठः कस्य शास्त्रस्य भविता परिरक्षकः ॥२३॥
एवं केनाऽप्युपायेन व्यवस्था क्रियतां तथा ।
येन स्यात् प्रौढपाण्डित्यं यथापूर्वं सुरक्षितम् ॥२४॥

यैः प्राक्तनैरहह देवगवी-गभीर—
ज्ञानाम्बुधौ नु विहितान्यवगाहनानि ।

तेषां सुताः सपदि तीरगवारिविन्दु–
स्पर्शेण केवलमहो दधतेऽभिमानम् ॥२५॥

## पञ्चमः सन्देशः

( संस्कृतशिक्षणपद्धतौ विद्यालयेषु च विवेचनात्मिकायाः धर्मसंस्कृतिशिक्षाया अभावमुद्दिश्य )

इदं च मे महद् दुःखं यत् साम्प्रतिकशिक्षणे ।
धर्म-संस्कृति-शिक्षाया व्यवस्था नैव दृश्यते ॥१॥
ये मयाऽभिहिता धर्माः संस्कृतिर्या च निर्मिता ।
ये ये च दत्ताः सन्देशा विश्वकल्याणकारिणः ॥२॥
तेषां वास्तविके ज्ञाने ज्ञापने वाऽनुशीलने ।
प्रसारे व्यवहारे वा युष्मद्ध्यानं न विद्यते ॥३॥
"संस्कृतं संस्कृतेर्मूलं जीवनञ्चापि संस्कृतेः ।
विनष्टे संस्कृते नूनं नष्टा स्यादार्यसंस्कृतिः" ॥४॥
इत्येवं घोषयन्तोऽपि कियन्तो हन्त पण्डिताः ।
किं रूपं संस्कृतेस्तस्या इति जानन्ति तत्त्वतः ॥५॥
श्रुति-स्मृति-पुराणानीतिहासो व्यासनिर्मितः ।
रामायणं च वाल्मीकं धर्मग्रन्था इमे स्मृताः ॥६॥
परन्तु धर्मग्रन्थानामेषां पण्डितमण्डले ।
पठनं पाठनं सम्यक् नहि कुत्रापि दृश्यते ॥७॥
श्रुतिरेवार्यधर्मस्य प्रधानं स्रोत उच्यते ।
अतस्तत्पठनं धर्मो द्विजानां परमः स्मृतः ॥८॥
परन्तु भवतां मध्ये कियन्तः सन्ति वैदिकाः ।
स्वशाखाध्ययनं वापि भवद्भिः किं विधीयते ॥९॥
आस्तामध्ययनं दूरे भवद्भिस्तु महात्मभिः ।
कस्य वेदस्य काः शाखा ज्ञायते नैतदप्यहो ॥१०॥
वाल्मीकिरवदत् यस्य प्रचारं रक्षसां गृहे ।
ब्राह्मणानां गृहे तस्य लोपोऽयमधुनेदृशः ? ॥११॥

मनुनाऽचार्यवर्येण पठनाय निजस्मृतेः ।
पाठनाय च विद्वांसो भूरिशः सन्ति नोदिताः ॥१२॥
छान्दोग्योपनिषद् ब्रूते मनूक्तं भेषजं परम् ।
परमस्यापि शास्त्रस्य कियन्तः सन्ति पाठकाः ॥१३॥
प्रामाण्ये तु पुराणानां विदुषामाग्रहो महान् ।
परमध्ययनं तेषां कियन्तो हन्त ! कुर्वते ॥१४॥
धर्मनीतीतिहासादेः ज्ञानविज्ञानयोस्तथा ।
महाभारतमार्याणां सुमहानाकरो मतः ॥१५॥
परमेतादृशस्यापि ग्रन्थरत्नस्य दर्शने ।
पठने वापि वर्तन्ते कियन्तः स्पृहयालवः ॥१६॥
एवं धार्मिकग्रन्थानां लुप्ते स्वाध्यायसङ्ग्रहे ।
धर्मस्य संस्कृतेर्वापि सुज्ञानं जायतां कथम् ॥१७॥
धर्म-संस्कृति-तत्त्वानामत एव विनिर्णये ।
स्वयं पण्डितवर्गेऽपि महाभ्रान्तिर्विलोक्यते ॥१८॥
अतो यथागतेनैव पथा विद्वज्जना अपि ।
गच्छन्ति मूढवत् त्यक्त्वा युक्तायुक्तविचारणाम् ॥१९॥
अत एवाऽधुना हिन्दुसमाजे सर्वतोदिशम् ।
धर्मस्य संस्कृतेश्चापि व्युत्क्रमो दृश्यते महान् ॥२०॥
अधर्मो धर्मतां यातो धर्मश्चाधर्मतां गतः ।
अवैदिकानां भावानां प्रचारः सर्वतोऽभवत् ॥२१॥
योऽयं सनातनो धर्मः पाल्यते साम्प्रतं जनैः ।
तत्सम्बन्धेऽधुना दृष्टा भिन्ना भिन्ना विचारणाः ॥२२॥
कश्चित् परम्परावादी कश्चित् पूर्णः सुधारकः ।
कश्चित् सर्वं परित्यज्य व्यवस्थामीहते नवाम् ॥२३॥
अतः सम्प्रति भूयांसो जना धर्मानुरागिणः ।
वास्तवे धर्मसंस्कृत्योर्विचारे सन्ति तत्पराः ॥२४॥
परन्तु भवतामस्यां दिशि दृष्टिर्न विद्यते ।
सर्वेऽपि सन्ति निश्चिन्ता मूकान्धबधिरा इव ॥२५॥

का संस्कृतिः कुतो जाता किमाधारा किमात्मिका ।
शुद्धा वा मिश्रिताऽन्याभिः शोभना वाऽप्यशोभना ॥२६॥
किंस्वरूपा कियद्रूपा कियद्दूरं च विस्तृता ।
किं हेयं किमुपादेयं तत्त्वञ्चाप्यत्र विद्यते ॥२७॥
के के तत्र तथाक्षेपाः कृता वैदेशिकैर्बुधैः ।
तषाञ्चापि समाधानं शक्यते वा न शक्यते ॥२८॥
भारतीयैश्च विद्वद्भिर्विभिन्नमतवादिभिः ।
या या भिन्नाः कृता व्याख्यास्तासु का युक्तिमत्तमाः ॥२९॥

पुनश्च—

को विधिः कोऽर्थवादश्च को भेदो मुख्यगौणयोः ।
अस्वर्ग्या नाम के धर्माः के च लोकविरोधिनः ॥३०॥
के के धर्मास्तथा लोभ-मोह-माया-प्रवर्तिताः ।
कियन्तो वैदिका धर्माः कियन्तस्तान्त्रिकास्तथा ॥३१॥
परस्परविरुद्धानामुक्तीनां का व्यवस्थितिः ।
के साम्प्रदायिका भावा धर्ममध्ये समागताः ॥३२॥
एतस्मिन् समये चाऽथ धर्मह्रासमयेऽशुभे ।
वर्तितव्यं न वाऽस्माभिरधर्मं त्यक्त्वाऽर्धरक्षणे ॥३३॥
अवश्यं ज्ञेयमित्येतत् सर्वं संस्कृतपण्डितैः ।
पाठशालासु चैतेषां शिक्षा देया विशेषतः ॥३४॥
परन्तु विदुषामेव विषयेष्वेषु वर्तते ।
यदा न तात्त्विकं ज्ञानं शिक्षायाः का कथा ततः ॥३५॥
महाविद्यालये वापि विश्वविद्यालयेऽपि वा ।
धर्मसंस्कृतिशिक्षायाश्चर्चा नाऽकर्ण्यते क्वचित् ॥३६॥
परन्तु धर्मसंस्कृत्योः परीक्षणयुगेऽधुना ।
न युक्तं संस्कृतज्ञानामेवं मौनावलम्बनम् ॥३७॥
स्थातव्यं वाऽधुना युद्धे कर्तव्यं वा पलायनम् ।
समन्वयो वा कर्तव्यः प्रबलैः प्रतिपक्षिभिः ॥३८॥

अतो धर्मस्य सम्बन्धे संस्कृतेर्विषये तथा ।
चिन्तनं विदुषां मन्ये परमावश्यकीं क्रियाम् ॥३९॥
धन्यास्ते सर्व एवापि महाराष्ट्रीय-पण्डिताः ।
धर्म-संस्कृति-सिन्धोर्ये मन्थने सन्ति तत्पराः ॥४०॥
तैरनेकानि वर्षाणि कृत्वा पूर्णं परिश्रमम् ।
धर्मसंस्कृति-सम्बन्धे विमर्शो विपुलः कृतः ॥४१॥

तथा हि—

गीताया विषये श्रीमत्तिलकेन मनीषिणा ।
गीतारहस्यनामैको ग्रन्थः सम्पादितोऽद्भुतः ॥४२॥
धर्मग्रन्थेषु हिन्दूनां प्राचीनेषु नवेषु वा ।
नेदृग् विवेचनापूर्णः कश्चिद् ग्रन्थोऽवलोक्यते ॥४३॥
सुधिया देवकृष्णेन धर्मादर्शोभिधो महान् ।
धर्मं नीतिं तथालम्ब्य ग्रन्थो विलिखितोऽद्भुतः ॥४४॥
धर्मकोशाभिधे स्वीये ग्रन्थे लक्ष्मणशास्त्रिभिः ।
धर्मस्य विषये कीदृक् सुमहान् सङ्ग्रहः कृतः ॥४५॥
वर्तमाने तु हिन्दूनां धर्मे संस्कारवादिभिः ।
बुधैरपि विचारार्हा लिखिता ग्रन्थराशयः ॥४६॥
तेऽधुना स्थापयित्वा तु धर्मनिर्णयमण्डलम् ।
कुर्वते नवया दृष्टया धर्माधर्मव्यवस्थितिम् ॥४७॥
श्रीमता रघुनाथेन सप्रमाणं सयुक्तिकम् ।
धर्मस्वरूपसम्बन्धे विचारो गहनः कृतः ॥४८॥
श्रीपादशास्त्रिभिस्तद्वत् विख्यातैर्वेदपण्डितैः ।
विचारा बहवः प्राच्यास्तर्कैरालोचिता भृशम् ॥४९॥
एवं परांजपे, काणे, दफ्तरी, पाठकस्तथा ।
दिवेकर महादेवः, शिन्दे, सातवलेकरः ॥५०॥
इत्यादिबहुविद्वद्भिः धर्मशास्त्रावगाहनम् ।
कृत्वा नवीना बहवो विचाराः प्रकटीकृताः ॥५१॥

एवं सनातने धर्मेऽपरिवर्तनवादिभिः ।
पण्डितैरपि भूयांसो ग्रन्था: श्रेष्ठाविनिर्मिताः ॥५१॥
विवेचकवरेण्येन श्रीमद्गोविन्द जोशिना ।
सर्वे सनातना धर्मा आद्योपान्तं समर्थिताः ॥५२॥
वेदोक्तधर्मसम्बन्धे श्री दीनानाथशास्त्रिभिः ।
लिखिता बहवो ग्रन्थाः प्रौढाः पाण्डित्यमण्डिताः ॥५४॥
सविस्तरं सुधीवर्यैः माधवाचार्यशास्त्रिभिः ।
युक्त्या समाहिताः सर्वे प्रश्ना धर्मविरोधिनः ॥५५॥
श्रीवसन्तकुमारेण विदुषा वङ्गवासिना ।
प्राचीना अखिलाः पक्षाः सम्यग्रूपेण मण्डिताः ॥५६॥
शास्त्रधर्मप्रचारिण्या सभया बहुपुस्तकैः ।
क्रियते बहुवर्षेभ्यः प्राचीनमतपोषणम् ॥५७॥
वेदविज्ञानसूर्येण श्रीमोतीलालशास्त्रिणा ।
लिखिता अद्भुता ग्रन्थाः प्राचीनाचारपोषकाः ॥५८॥
अपरैः शङ्कराचार्यैः श्रीस्वामिकरपात्रिभिः ।
लिखितः सुमहान् ग्रन्थः साम्यवादस्य खण्डने ॥५७॥
समीक्षणे कृते तस्य राहुलेन मनीषिणा ।
पुनः श्रीस्वामिभिः सम्यग् विहितं तस्य खण्डनम् ॥६०॥
धीमान् स्वामी दयानन्दो महाविद्वान् उमापतिः ।
आभ्याञ्च द्वौ महाग्रन्थौ लिखितौ धर्मपोषकौ ॥६१॥
राधाकृष्णनुप्रभृतिभिस्तथाऽन्यैरपि पण्डितैः ।
धर्म-संस्कृति-सम्बन्धे विचारो गहनः कृतः ॥६॥
अथ प्राचीनधर्मेषु विद्वांसो येऽधुनातनाः ।
श्रद्धां नो दधते, तेषां कुर्वन्त्यालोचनां तथा ॥६३॥
तेषामपि बहुग्रन्था निबन्धा बहवस्तथा ।
सन्ति प्रकाशिताः प्रौढयुक्तिबुद्धिपुरस्कृताः ॥६४॥
सर्वेषामपि चैतेषां यावज्ज्ञानं न जायते ।
न तावद् धर्मसम्बन्धे सुकरः कोऽपि निर्णयः ॥६५॥

अद्यापि बहवोऽस्माकं देशे श्रद्धालवो जनाः ।
पण्डितानेव पृच्छन्ति धर्माधर्मव्यवस्थितिम् ॥६६
अतः संस्कृतविद्वद्भिश्छात्रैश्चापि वयोऽधिकैः ।
सम्पाद्यं धर्मसम्बन्धे सम्यग्ज्ञानं कथञ्चन ॥६७॥

अथ च—

परोक्षवादाः के नाम के वा पण्डितमानिनः ।
पुष्पिता वा गिरः काश्च ज्ञेयं सर्वमिदं बुधैः ॥६५॥
शास्त्रेषु यानि वाक्यानि रोचनार्थानि केवलम् ।
अवश्यं तान्यपि स्पष्टीकरणीयानि शिक्षणे ॥६६॥
फलश्रुतीनां मेघौघैर्धर्माकाशे समावृते ।
नहि शक्यः सुखं द्रष्टुं सामान्यैः सत्यभास्करः ॥६७॥
अस्वर्ग्यो लोकविद्विष्टो धर्मः को नाम कथ्यते ।
धर्माभासशबलं वापि किं स्वरूपं भवत्युत ॥६८॥
नियमो वा यमाच्छ्रेष्ठो यमो वा नियमादथ ।
धर्माणामन्तिमं साध्यं किं, कथं लभ्यते च तत् ॥६९॥
इत्येते विषयाः सर्वे चिन्तनीया मनीषिभिः ।
बोद्धव्या बोधनीयाश्च विद्यागारेषु सर्वदा ॥७०॥

विद्यालयः सुरगिरो, गुरुशिष्यवर्गः
प्रायो द्विजोऽथ वसतिर्मठमन्दिरेषु ।
तत्रापि धर्मविषयस्य न शिक्षणं चेद्
हंहो कुतो नु भविता वत धर्मबोधः ॥७१॥

## षष्ठः सन्देशः

( परीक्षाबहिर्भूतानां ग्रन्थानां पठने अप्रवृत्तिमुद्दिश्य )

अयञ्चापि विचित्रो वः स्वभावो मेऽतिदुःखदः ।
यत् परीक्षास्थितान् ग्रन्थान् हित्वा नाऽन्यानधीयते ॥१॥
यथाकथञ्चित् क्रीत्वा वा याचित्वा वा यतस्ततः ।
परीक्ष्येष्वेव ग्रन्थेषु नयन्ति निजजीवनम् ॥२॥

अनेन वः स्वभावेन सर्वलोकातिशायिना ।
बहूनां ग्रन्थरत्नानां प्रचारो विलयं गतः ॥३॥
यद्यपि ज्वालिता वह्नौ विविधा ग्रन्थराशयः ।
लुण्ठिताऽपहृताश्चापि विदेशस्थैरनैकशः ॥४॥
कीटैः कवलिताः केचित् केचिद् ध्वस्ता धरातले ।
केचिद् गोपनबुद्धयैव विलोपं प्रापिताः परैः ॥५॥
एवं मे यदभून्नष्टं विशालं हन्त वैभवम् ।*
अद्यापि शोकशल्योऽसौ हृदयान्नापसर्पति ॥६॥

तथापि भवतां पूर्वपुरुषाणां प्रयत्नतः ।
अवशिष्टं यदास्ते तत् न स्वल्पं गौरवावहम् ॥७॥
आंग्लानां तूपकारोऽसौ विस्मर्तुं नैव शक्यते ।
लुप्ता ग्रन्था अनेके तैर्यदानीताः प्रकाश्यताम् ॥८॥
परन्त्वन्वेषणे तेषां दर्शनेऽध्ययने तथा ।
जिज्ञासा वा प्रवृत्तिर्वा पण्डितानां न दृश्यते ॥९॥

तथा हि—

धर्मार्थकाममोक्षाख्याश्चत्वारो हिन्दुसंस्कृतौ ।
पुरुषार्था मता येषां कर्तव्या साधनाऽखिलैः ॥१०॥
चतुर्णामपि चैतेषां संसिद्धयै मम वाङ्मये ।
वर्तन्तेऽत्युत्तमा ग्रन्था भूयांसो विश्वविश्रुताः ॥११॥
परन्तु तेषां ग्रन्थानां पठने पाठनेऽथवा ।
प्रवृत्तिः पण्डितानान्तु क्वचिन्नैवोपलभ्यते ॥१२॥
कौटलीयार्थशास्त्रस्य कामशास्त्रस्य चैव हि ।
प्रसिद्धिर्वर्तते देशे विदेशेऽपि च भूयसी ॥१३॥
परन्त्वीदृशयोर्ग्रन्थरत्नयोरपि सम्प्रति ।
नहि दृष्टो मया पाठः पण्डितानां शतेष्वपि ॥१४॥

---

* अस्मिन् विषये कार्यालयद्वारा प्रकाशयिष्यमाणं "संस्कृत साहित्य के विलुप्त ग्रन्थरत्न" इति पुस्तकमवलोकनीयम् ।

ज्ञान-विज्ञान-शास्त्रेषु निखिलेष्वपि भूतले ।
ज्ञानं दर्शनशास्त्रीयं भारतस्य विशिष्यते ॥१५॥
परं दर्शनशास्त्रस्य वर्णमालापि पण्डितैः ।
अनेकैर्ज्ञायते नैव किमाश्चर्यमतः परम् ॥१६॥
आध्यात्मिकेषु ग्रन्थेषु योगवाशिष्ठनामकः ।
एको निरुपमो ग्रन्थो वर्तते मम वाङ्मये ॥१७॥
ग्रन्थरत्नमिदं येन संस्कृतज्ञेन नेक्षितम् ।
तस्य व्यर्थमहं मन्येऽध्ययनं जीवनं तथा ॥१८॥
श्रीमद्-भीपणलालेनात्रेयेण सुमनीषिणा ।
लेखव्याख्यादिना तस्य महत्त्वं बहु कीर्तितम् ॥१९॥
परमेतस्य रत्नस्य रूपमप्यवलोकितम् ।
कियद्भिर्ननु युष्मासु सत्यं सत्यं निगद्यताम् ॥२०॥
इदानीं भगवद्गीताऽध्यात्मग्रन्थेषु भूरिषु ।
देशे विदेशे सर्वत्र महतीं मान्यतां गता ॥२१॥
परमस्यापि ग्रन्थस्य ज्ञाने वा प्रतिपादने ।
समर्थाः पण्डिताः सन्ति कियन्त इति कथ्यताम् ॥२२॥
धर्मशास्त्रेषु सर्वेषु सुप्रसिद्धा मनुस्मृतिः ।
आद्योपान्तं परं कैः कैः स्मृतिरेषाऽवलोकिता ॥२३॥
ग्रन्थानामथ चैतेषां ज्ञानज्ञापनवर्जनात् ।
चतुर्भ्यः पुरुषार्थेभ्यः पण्डिता अपि वञ्चिताः ॥२४॥
एममेव च वर्तन्ते नीतिग्रन्था अनेकशः ।
येषाध्ययनं लोके परमं हितकारकम् ॥२५॥
मनोश्च शुक्राचार्यस्य गुरोः कामन्दकस्य च ।
भीष्मस्य विदुरस्याथ चाणक्यस्य च धीमतः ॥२६॥
आचार्यसोमदेवस्य विद्यापतिकवेस्तथा ।
आचार्याणां तथाऽन्येषामनेकाः सन्ति नीतयः ॥२७॥
परं ता अपि पठ्यन्ते पाठ्यन्ते वा न पण्डितैः ।
लौकिकार्थेषु विद्वांसस्तेनाऽलौकिकतां गताः ॥२८॥

एको राजेश्वरः शास्त्री सतु धन्यो महासुधीः ।
येनानुशीलितः सर्वो नीतिशास्त्रस्य संग्रहः ॥२९॥
एवं वेदोपनिषदो ब्राह्मणारण्यके तथा ।
पुराणानि च सर्वाणि श्रीरामायणभारते ॥३०॥
अश्वशास्त्रं हस्तिशास्त्रं धनुःशास्त्रं तथैव च ।
नाट्यशास्त्रं च सङ्गीतशास्त्रं तन्त्राणि चैव हि ॥३१॥
काव्य-नाटक-ग्रन्थाश्च सर्वदर्शनसंग्रहः ।
नानाविधं प्रहसनं विविधा गीतिपुस्तिकाः ॥३२॥
सुभाषितानि कोशाश्च भाणग्रन्था अनेकशः ।
गद्य-पद्य-निबद्धाश्च कथाग्रन्था मनोहराः ॥३३॥
चैतन्यसम्प्रदायस्थैः वाल्लभैश्चापि सूरिभिः ।
रचिताः कृतयोऽपूर्वा लालित्ये पदभावयोः ॥३४॥
अनेकार्थानि काव्यानि चित्रकाव्यानि यानि च ।
चम्पूग्रन्था अनेके ते दण्डकानि बहूनि च ॥३५॥
क्षेमेन्द्रकृतयः सर्वा लौकिकज्ञानराशयः ।
मनोरञ्जनग्रन्थाश्च दीक्षितादिविनिर्मिताः ॥३६॥
आर्यासप्तशती दिव्या गाथासप्तशती तथा ।
दूतकाव्यान्यनेकानि लहरीपुस्तकान्यपि ।
नानाविषयबद्धानि शतकानि बहूनि च ॥३७॥
स्तोत्ररत्नान्यपूर्वाणि प्रौढानि रुचिराणि च ।
श्रीनारायणभट्टानां प्रबन्धा बहवोऽद्भुताः ॥३८॥
कविकह्लणसंदब्धा रम्या राजतरङ्गिणी ।
श्रीमच्छङ्करपादानां काव्यं दिग्विजयाभिधम् ॥३९॥
एते ग्रन्थास्तु द्रष्टव्या अध्येतव्यास्तथैव च ।*
द्रव्ये सति यथाशक्यं रक्षणीया निजे गृहे ॥४०॥

---

* एतादृशपुस्तकानां विशेषपरिज्ञानाय कार्यालयद्वारा प्रकाश्यमानं "संस्कृत-साहित्य की कतिपय उपेक्षित महत्त्वपूर्ण रचनायें" इति पुस्तकं द्रष्टव्यम् ।

एवं विंशशताब्दीयैरपि नैकैः सुधीजनैः ।
भूयांसो लिखिता ग्रन्था प्रौढवैदुष्यभूषिताः ॥४१॥
परं तेषामपि ज्ञाने सम्माने वाऽनुशीलने ।
दृश्यन्ते प्रायशः सर्वे विद्वांसः शिथिलादराः ॥४२॥

यथा—

साहित्यवैभवं नाम नवछन्दोमयी कृतिः ।
भट्टश्रीमथुरानाथशर्म्मणा रचिताऽद्भुता ॥४३॥
उमापतिद्विवेदेन कविरत्नेन सूरिणा ।
बृहत्त्रयी-प्रतिस्पर्द्धि महाकाव्यं व्यरच्यत ॥४४॥
अपूर्वप्रतिभापुञ्जैः "हसूरकर" शास्त्रिभिः ।
बहुगद्यकथाग्रन्था निरमीयन्त मञ्जुलाः ॥४५॥
कविकैरवचन्द्रेण बदरीनाथशर्मणा ।
गुणेश्वरचरित्राख्या हृद्या चम्पूर्विनिर्मिता ॥४६॥
वेदविज्ञानसूर्येण मधुसूदनशर्मणा ।
लिखितं कीदृशं काव्यं तदिन्द्रविजयाभिधम् ॥४७॥
रामावतारसंज्ञेन विख्यातेन मनीषिणा ।
कृतयो लिखिता बह्वयो विद्वद्विस्मापना भृशम् ॥४८॥
शास्त्रिणा श्रीनिवासेन वैद्येन लिखितो महान् ।
उपन्यासो मनोहारी नव्यश्चन्द्रमहीपतिः ॥४९॥
महामहोपाध्यायैश्च मथुरानाथदीक्षितैः ।
वार्द्धक्येऽपि व्यलिख्यन्त ग्रन्था बहुविधा नवाः ॥५०॥
श्रीमन्मङ्गलदेवेन शास्त्रिणा स्फूर्तिदायिकाः ।
कीदृश्योऽपूर्वभावाढ्या रचिता रम्यसूक्तयः ॥५१॥
श्रीमदणाङ्गराचार्यैर् ग्रथिता ग्रन्थराशयः ।
गद्य-पद्य निबन्धाश्च कस्य नो विस्मयावहाः ॥५२॥
मान्यैर्भगवदाचार्यैः श्रीमद्गान्धिमहात्मनः ।
चरित्रविषयेऽपूर्वं महाकाव्यं प्रकाशितम् ॥५३॥

श्रीवैदेहीविवाहाख्यं कविभिः कृष्णमूर्तिभिः ।
कमनीयतमं नव्यं गद्यकाव्यं विनिर्मितम् ॥५४॥
क्षमारावेति विख्याता कवयित्री मनीषिणी ।
चमत्कारमयी रम्या रचना अकरोदहो ॥५५॥
चन्द्रशेखरमिश्रेण विदुषाऽतिमनोहरः ।
नीतिग्रन्थो विरचितो नीतिदर्पणनामकः ॥५६॥
श्रीमता राघवार्येण विख्यातेन मनीषिणा ।
कविता निरमीयन्त कीदृश्यो ननु कोमलाः ॥५७॥
श्रीसत्यदेववाशिष्ठ-विदुषा भिषजा नवम् ।
नीतिकाव्यं मनोहारि दर्शनीयं विनिर्मितम् ॥५८॥
कवये सोमनाथाय नमो नेपालवासिने ।
सुरम्याः स्तुतयो यस्य स्मारयन्ति जगद्धरम् ॥५९॥
श्रीजीवन्यायतीर्थेन कलाकुशलशिल्पिना ।
गुम्फिता कीदृशी रम्या काव्यनाटकमालिका ॥६०॥
भगवद्दत्त "राकेश" कविना कियदद्भुतम् ।
संस्कृतेऽनूदिता हृद्या हिन्दीकामायनी कृतिः ॥६१॥
गोपेन्दुभूषणाख्येन विदुषा तुलसीकृतम् ।
सर्वं संस्कृतपद्येषु निबद्धं खलु मानसम् ॥६२॥
श्रीविष्णुकान्तझोपाह्व-कविना ननु कीदृशी ।
रम्या राजेन्द्रवंशस्य प्रशस्तिर्लिखिता खलु ॥६३॥
सूर्यनारायणाख्येन शास्त्रिणा रचितान्यहो ।
कीदृशानि मनोज्ञानि खण्डकाव्यान्यनेकशः ॥६४॥
श्रीमद्गणेशरामेण सूरिणा च विनिर्मिताः ।
हास्य-गीति-कथा-काव्य-कृतयो ललिताद्भुताः ॥६५॥
श्रीमद्रामकुबेरेण मालवीयेन सूरिणा ।
मालवीयमहाकाव्यं मालवीयोपमं कृतम् ॥६६॥
एवं वाङ्मयमालायां प्राचीनायां मनोहराः ।
अमूल्या मणयोऽनेके नवीनैरपि गुम्फिताः ॥६७॥

परमेषां प्रकाशेन कियतां विदुषामहो ।
उद्भासितानि सद्मानि विद्यन्ते, तन्निगद्यताम् ॥६८॥
नूतनं लिखितं किं किं कुत्र केन मनीषिणा ।
इति वेत्तुं सुधीवृन्दे स्पृहा प्रायो न दृश्यते ॥६९॥
नवनिर्मितग्रन्थानां सम्मानेऽपि सुधीजनैः ।
प्रायशो मत्सरग्रस्तैरौदार्यं न प्रदर्श्यते ॥७०॥
किन्तु वृत्तिमिमां हित्वा विदुषामयशस्करीम् ।
द्रष्टव्या बहवो ग्रन्थाः प्राचीना नूतनास्तथा ॥७१॥

अन्यच्च—

स्थानेभ्योऽथ बहुभ्यश्च विविधाः पत्रिका अपि ।
साप्ताहिक्योऽथ मासिक्यः पाक्षिक्यश्चापि काश्चन ॥७२॥—
सहमानैरपि क्लेशं वहमानैर् ऋणं तथा ।
वीरैः कैश्चित् प्रकाश्यन्ते संस्कृतोन्नतिकाम्यया ॥७३॥
पत्रिकाणामपि प्रायस्तासां नामादिकस्य च ।
बहूनां संस्कृतज्ञानां किञ्चिज्ज्ञानं न वर्तते ॥७४॥
एतेषां ग्रन्थरत्नानां* पत्रिकाणां† तथैव च ।
सङ्ग्रहोऽध्ययनञ्चापि कर्तव्यं सकलैः बुधैः ॥७५॥ *

---

* नवनिर्मितानां संस्कृतग्रन्थानां साकल्येन परिज्ञानाय निम्नांकिता ग्रन्था निबन्धाश्च अवलोकनीया :—

१—अर्वाचीन संस्कृत साहित्य [ श्री प्रा० वर्णेकरमहोदयैः मराठी भाषया उपनिबद्धो ग्रन्थः ] मूल्यम् २०-० ओरिएन्टल बुक एजेन्सी, पूना ।

२—Modern Sanskit Rightings ( by dr. v. ragh avan )

३—विद्वद्वृत्तम् ( श्री पं० कालीप्रसादशास्त्रिभिर्निबद्धम् ) संस्कृत कार्यालय, अयोध्या ।

४—contribution of Kerala to Sanskrit titerture [ By K. Kunjunni Raja ] इदं केरलीयकृतिविषये द्रष्टव्यम् ।

५—संस्कृतप्रतिभानाम्न्याः पत्रिकायाः [ साहित्य अकादमी, नई दिल्लीतः प्रकाश्यमानायाः ] निकषोपलनामा समालोचनास्तम्भः । (अग्रेऽपि)

सर्वेषां संस्कृतज्ञानां गेहे गेहे निजो निजः ।
एकैको लघुकायोऽपि पुस्तकालय इष्यते ॥७६॥
एवं च मेऽप्रसिद्धानां विलुप्तानां च भूयसाम् ।
सर्वेषामपि ग्रन्थानां प्रचारो भविता पुनः ॥७७॥
अतो भवन्तोऽध्ययने त्यक्त्वा सङ्कीर्णतां बुधाः ।
अद्यारम्य प्रवर्तन्तां विस्तृतज्ञानसंग्रहे ॥७८॥
बहवस्तु बुधाः पार्श्वे ग्रन्थागारेषु सत्स्वपि ।
रुचिमन्तो न दृश्यन्ते ग्रन्थानामवलोकने ॥७९॥
कासुचित् पाठशालासु सत्यपि ग्रन्थसङ्ग्रहे ।
तत्र तस्य समीचीना व्यवस्था नाऽवलोक्यते ॥८०॥
दानादान-व्यवस्थाया विरहात्, अरुचेरपि ।
वेष्टिता एव तिष्ठन्ति ग्रन्थाः केचित्तु सर्वदा ॥८१॥
एतेषामपि दोषाणां कृत्वा झटिति मार्जनम् ।
संस्कृतग्रन्थशालानां कार्या सम्यग् व्यवस्थितिः ॥८२॥

अनेकविषयोचिताध्ययनचिन्तनालोचनो—
पलब्धवरवैदुषी-प्रथितकीर्तिकम्रा बुधाः ।
चिरन्तनपरम्पराधिगतमात्मनो गौरवं
यशस्वि जगतीतले पुनरवाप्य देदीप्यताम् ।८३

## सप्तमः सन्देशः

( जैन-बौद्ध-वाङ्मयस्याध्ययने श्रद्धाया रुचेश्चाभावमुद्दिश्य )

एषाऽपि भवतां वृत्तिर्न मह्यं खलु रोचते ।
वाङ्मयं जैन-बौद्धानां यद् भवन्तः पठन्ति नो ॥१॥

---

† लभ्यमान-संस्कृतपत्रपत्रिकाणां परिचयाय परिशिष्टभागोऽवलोकनीयः ।

विलुप्तपत्रपत्रिकाणां विषये विशेषज्ञानाय सागरविश्वविद्यालयस्य संस्कृत-विभागतः प्रकाश्यमानायाः "सागरिका" पत्रिकायाः प्रथमे द्वितीये चाङ्के प्रकाशितः "संस्कृतपत्रकारिता" नामको निबन्धः पठनीयः ।

अनयोरपि साहित्ये विशाले विश्वविश्रुते ।
बहवः संस्कृतग्रन्था वर्तन्तेऽत्युत्तमोत्तमाः ॥२॥ ❀
परन्तु तेषां ग्रन्थानां नामान्यपि न जानते ।
प्रायो भवन्तः सर्वेऽपि तन्मे दुःखतरं महत् ॥३॥
काव्ये व्याकरणे नाट्ये नीतौ धर्मेऽथ दर्शने ।
इतिवृत्ते कथायां च सम्यक्चारित्रशिक्षणे ॥४॥—
ज्यौतिषे वैद्यके शिल्पे भूगोलविषये तथा ।
विषयेष्वेषु सर्वेषु तथैवाऽन्यविधेष्वपि ॥५॥—
अपूर्वप्रतिभापुञ्जैः जैनैर्बौद्धैर्मनीषिभिः ।
लिखिता बहवो ग्रन्था विद्वद्विस्मयकारिणः ॥६॥
एते सर्वेऽपि सद्ग्रन्था गौरवं दर्शयन्ति मे ।
भारतीयं महत्त्वं च ख्यापयन्ति समन्ततः ॥७॥
यदि जैनं च बौद्धं च वाङ्मयं नोद्गतं भवेत् ।
न पूर्णतां गताऽहं स्यां न वैतादृग् यशस्विनी ॥८॥
भारतीयेतिहासस्य तथा भारतसंस्कृतेः ।
ज्ञानाय चैतत् साहित्यं परमावश्यकं मतम् ॥९॥
परं धार्मिकवैमत्यादौदासीन्यादथापि वा ।
न तत्र पण्डिताः प्रायः स्नेहं श्रद्धां च कुर्वते ॥१०॥
किन्तु प्रचारकालेऽस्मिन् मम माहात्म्यवृद्धये ।
पण्डितानां मनोवृत्तिरियं नैव शुभावहा ॥११॥
स तु धन्यतमः डाक्टर सिलवन लेवी महोदयः ।
येनोद्धृता विदेशेभ्यो बौद्धग्रन्था अनेकशः ॥१२॥
सच सम्माननीयो मे राहुलो विदुषां वरः ।
बौद्धग्रन्थाः समानीता येनाऽनेकेऽन्यदेशतः ॥१३॥
अहो तपस्विना तेन चिरं कृत्वा महाश्रमम् ।
भूयांसो दुर्लभा ग्रन्थाः शोधपूर्वं प्रकाशिताः ॥१४॥

---

❀ बौद्ध-जैन-संस्कृतग्रन्थानां नामानि नानासूचीपत्रेभ्यो ज्ञातव्यानि ।

अतो भवद्भिरप्येषां ग्रन्थानां जैनबौद्धयोः ।
साधने समये लब्धे कार्यं प्रीत्याऽवलोकनम् ॥१५॥
बौद्धसंस्कृतसाहित्ये ग्रन्थं ललितविस्तरम् ।
प्रज्ञापारमितादींश्च नूनं पश्यन्तु पण्डिताः ॥१६॥
एतेषां ग्रन्थरत्नानां भाषैवालोक्यतां मनाक् ।
कीदृशी सरला हृद्या ललिता चित्तहारिणी ॥१७॥
जैनसंस्कृतसाहित्येऽप्येवं ग्रन्था मनोहराः ।
भूयांसः खलु विद्यन्ते विदुषां विस्मयावहाः ॥१८॥*
मेरुतुङ्गादिसूरीणां प्रबन्धा बहवोऽद्भुताः ।
कथारत्नाकराद्याश्च कथाग्रन्था मनोरमाः ॥१९॥
यशस्तिलकचम्पूश्च क्षत्रचूडामणिस्तथा ।
ज्ञानार्णवस्तथाऽनेके सूक्तिग्रन्था मनोहराः ॥२०॥
एते तु भाषया भावैः शैलीभिर्विषयैस्तथा ।
उत्तमा निखिला ग्रन्था द्रष्टव्या बुधसत्तमैः ॥२१॥
एतयोर्धार्मिका ग्रन्थास्तथा दार्शनिकाश्च ये ।
संग्राह्याः श्रद्धयाऽवश्यं ज्ञानाब्जरविरश्मयः ॥२२॥
अथ ये ये च वर्तन्ते पालिप्राकृतयोरपि ।
महत्त्वपूर्णाः सद्ग्रन्था नानाविषयशालिनः ॥ २३॥†
तेषामपि यथाशक्ति ग्रन्थानामवलोकनम् ।
विधीयेत भवद्भिश्चेत् सुतरां शोभनं भवेत् ॥२४॥

---

* अस्मिन् विषये निम्नांकिता ग्रन्था अवलोकनीयाः—
१—जिनरत्नकोश, वेलकर ।
२—जैन दार्शनिक साहित्यका सिंहावलोकन, दलसुख भाई ।
३—जैन साहित्य और इतिहास, नाथूराम प्रेमी ।
४—जैन ग्रन्थ और ग्रन्थकार, फतेहचन्द बेलानी ।

† प्राकृत साहित्य का इतिहास, डा० जगदीशचन्द जैन ।
पालिसाहित्य का इतिहास, भरतसिंह उपाध्याय ।

अल्पीयसा प्रयत्नेन पाली-प्राकृत-भाषयोः ।
भवद्भिः शक्यते लब्धुं ज्ञानं वैदुष्यवर्द्धकम् ॥२५॥ ❀

धर्म-संस्कृति-विचारभेदजं
वैमनस्यमपनीय मानसात् ।
जैन-बौद्ध-रचनाऽनुशीलने
तत्परा भवत तत्त्वलिप्सवः ॥२६॥

## अष्टमः सन्देशः

( सङ्गीताभिनयादिललितकलानां बहुलप्रयोगाभावमुद्दिश्य )

इदमप्यपरं मुख्यं मम वैरस्यकारणम् ।
सुप्रीतिं यन्न पश्यामि ललितासु कलासु वः ॥१॥
जीवनोन्नतये धर्मो विज्ञानं वाऽथ साहिती ।
यथैव हितकृन्नृणां तथैव सकलाः कलाः ॥२॥
यद्यत् सत्यतमं लोके यद्यत् शिवतमं तथा ।
तत् सौन्दर्यसुसम्पृष्टं कलाभिरुपलभ्यते ॥३॥
कलाविरहिता वाणी कलाविरहिता क्रिया ।
कलाविरहिता दृष्टिर् निष्फलैवेति मन्यताम् ॥४॥
अत एव पुरा जातैर्भारतीयैर्मनीषिभिः ।
कलानां विषये ग्रन्था लिखिता बहवोऽभवन् ॥५॥†
परं पण्डितलोकेषु वृद्धेषु तरुणेषु वा ।
कलाविषयिणी प्रीतिः प्रायशो नाऽवलोक्यते ॥६॥

---

❀ हिन्दी प्राकृत व्याकरण, आचार्य मधुसूदन प्रसाद मिश्र ।
पालि व्याकरण, भिक्षु धर्मरक्षित ।

† अवलोक्यतां "कुट्टनीमते" प्रारम्भ एव तत्कर्तुः श्रीदामोदरगुप्तस्य वचनम्, तथा The Kalas ( By A. venkatsubbiah ) इतिनामकः कलाविषयको निबन्धश्च ।
तथा हि—

अन्याः कला विहीयन्तां पद्यपाठे मनोरमे ।
सङ्गीतेऽभिनये चापि न कापि रुचिराप्यते ।।७।।
यद्येतास्वपि रम्यासु कलासु सकला बुधाः ।
बद्धादरा भवेयुश्चेत् प्रमोदो मे महान् भवेत् ।।८।।
बाहुल्यं छन्दसां, तेषां संगीतात्मकता तथा ।
पदानामथ लालित्यम् , रम्यानुप्रासयोजनाः । ६।।—
इमाः संकृतपद्यानां बह्व्यः सन्ति विशेषताः ।❀
भूतलस्यान्यभाषासु प्रायशो याः सुदुर्लभाः ।।१०।।
श्रीमच्छंकरपादानां विपुलाः पद्यराशयः ।
मूकपञ्चशती चापि कृतिर्मूकमहाकवेः ।।११।।
श्रीजगद्धरभट्टस्य स्तुतीनां कुसुमाञ्जलिः ।
वेदान्तदेशिकस्यापि स्तुतयस्ता मनोहराः ।।१२।।
नारायणीयं ललितं अश्वधाट्यो मनोरमाः ।
स्तोत्रं श्रीभुवनेश्वर्याः सौन्दर्यलहरी तथा ।।१३।।
श्रीमत्पण्डितराजस्य ललिताः कृतयोऽखिलाः ।
आर्यापद्यानि भूयांसि सरसं शिवताण्डवम् ।।१४।।
विविधा विरुदावल्यः श्रीकृष्णाह्निककौमुदी ।
हरिरायस्य पद्यानि गोपीगीतादिकं तथा ।।१५।।
एवमन्यैर्व्यरच्यन्त बहुपद्यानि सूरिभिः ।
तानि सर्वाण्यपूर्वाणि सम्पूर्णे विश्ववाङ्मये ।।१७।। †
छन्दांसीमानि तेषाञ्च ध्वनिमत्यन्तमद्भुतम् ।
मन्येऽहं कवितावध्वा मञ्जुमञ्जीरशिञ्जितम् ।। ८।।
यदि तादृशपद्यानि पठ्येरन् मधुरैः स्वरैः ।
तदात्मनः परेषां च प्रमोदः सुमहान् भवेत् ।।१६।।

---

❀ यथा कार्यालयप्रकाशिते संस्कृतगौरवगाने वर्णितम् ।

† एतादृशपुस्तकानां विशेष परिज्ञानाय कार्यालयद्वारा प्रकाश्यमानं "संस्कृत साहित्य की कतिपय उपेक्षित महत्त्वपूर्ण रचनायें" इति पुस्तकं द्रष्टव्यम् ।

ललितानि पदान्येव श्रुत्वा मोमुद्यते मनः ।
यदि सुस्वरयोगः स्यात्तदाऽनन्दस्य का कथा ॥२०॥
परं संस्कृतपद्यानां पाठस्य मधुरैः स्वरैः ।
तीव्राकाङ्क्षा व्यवस्था वा न कुत्राप्यवलोक्यते ॥२१॥ ❀
पद्यगन्धीनि गद्यानि दण्डकाख्यानि संस्कृते ।
यान्यनेकानि वर्तन्ते तान्यलभ्यानि भूतले ॥२२॥
तेषां निर्झरधारेव प्रवाहोऽतिमनोहरः ।
सस्मितं विस्मितं चापि न कस्य कुरुते मुखम् ॥२३॥
मदुरानगरस्थाभ्यो बालिकाभ्यः श्रुतं मया ।
श्यामलादण्डकं हृद्यं नाद्यापि खलु विस्मृतम् ॥२४॥
न च केवलपद्यानि केवलं दण्डकानि वा ।
गद्यान्यपि स्वरैर्हृद्यैः शक्यन्ते पठितुं सुखम् ॥२५॥
संस्कृतच्छात्रनिलये बेंग्लोरनगरस्थिते ।
छात्र्या कयाचिदश्रौषं गद्यं गीतं मनोहरम् ॥२६॥
एतादृशानि वस्तूनि चमत्कारीणि जीवने ।
बहुभिः पण्डितैर्जीने नाऽधीतानि श्रुतानि वा ॥२७॥
दाक्षिणात्येषु विद्वत्सु औत्कलेष्वपि केषुचित् ।
दृश्यते रुचिरा काचित् पद्यपाठस्य पद्धतिः ॥२८॥
परं नान्यप्रदेशेषु व्यापिनी काऽपि तादृशी ।
रीतिः प्रचलिता दृष्टा पद्यपाठस्य शोभना ॥२९॥
श्रीवीरराघवाचार्यः स तु धन्यो विदां वरः ।
पद्यं यद्वदनाच्छ्रुत्वा नरो विस्मयमावहेत् ॥३०॥
श्रुत्वा हृद्यतमं पाठं श्रीमल्लक्ष्मणशास्त्रिणाम् ।
के विमुग्धा न जायन्ते मानिनोऽपि बुधा अहो ॥३१॥
अथ त्रिनाथदासस्य पद्यपाठनपद्धतिः ।
श्रूयतां कीदृशी रम्या सरसाऽमृतवर्षिणी ॥३२॥

---

❀ उत्तमरूपेण पद्यपाठसम्बन्धे काव्यमीमांसायाः सप्तमोऽध्यायो द्रष्टव्यः ।

श्रीमदानन्दझोपाह्वविदुषां वदनोद्‌गताः ।
श्लोकाः कुर्वन्ति सानन्दान् लोकान् शोकयुतानपि ॥३३॥
करुणारससम्पूर्णाः श्लोका आनन्दशास्त्रिणाम् ।
तरूणामपि शुष्काणां कुर्युः सरसतां खलु ॥३४॥
एवं संस्कृतगीतानां गाने वा शिक्षणेऽपि वा ।
सङ्कुचन्तो विलोक्यन्ते बहवः पण्डिता भृशम् ॥३५॥
एषा सङ्गीतविद्या तु भवतामेव पूर्वजैः ।
ऋषिभिर्मुनिभिश्चापि प्रापिता परमोन्नतिम् ॥३६॥
स्वयं सायण आचार्यः स महान् वेदवारिधिः ।
प्रेरयत्यात्मनः पुत्रं प्रीत्या सङ्गीतशिक्षणे ॥३७॥*
अतः श्रीजयदेवाद्यैरनेकैः कविपुङ्गवैः ।
रचितानि मनोज्ञानि बहुगीतानि संस्कृते ॥३८॥
गीतगोविन्दगीतानामपूर्वा पदमाधुरी ।
कोमला ललिता कान्ता दिशामन्तमुपागता ॥३९॥ †
परं तादृशगीतानां गाने वा सङ्ग्रहेऽपि वा ।
विरला एव विद्वांसो दृष्टा औत्कण्ठ्यशालिनः ॥४०॥
एवमेव च भूयोभिः कविभिर्नूतनैरपि ।
नव्येषु लयतालेषु लिखिता गीतयोऽद्भुताः ॥४१॥
भारतेन्दुर्हरिश्चन्द्रस्तथा श्री कमलेशझाः ।
भट्टश्रीमथुरानाथो जानकीवल्लभस्तथा ॥४२॥

---

* यथा अलङ्कारसुधानिधौ पठ्यते—
तत् संव्यञ्जय कम्पण व्यसनिनः सङ्गीतशास्त्रे तथा
प्रौढिं मायण गद्य-पद्य-रचनापण्डित्यमुन्मुद्रय ।
शिक्षां दर्शय शिङ्गण क्रमजटाचर्चासु वेदेष्विति
स्वान् पुत्राननुशालयन् गृहगतः सम्मोदते सायणः ॥
( कम्पणः मायणः शिङ्गणश्चेति सायणाचार्यस्य त्रयः पुत्रा आसन् )

† अवलोक्यतां गीतगोविन्दस्य "Indian song of songs" इति नामके आंग्लपद्यानुवादात्मके [ पुस्तके Sir Edvin Arnold विरचिते ] तस्य भूमिकाभागः ।

कालीप्रसादः प्रणयी वदरीनाथपण्डितः ।
श्रीशो रुद्रः प्रभातश्च काशिनाथ-त्रिनाथकौ ॥४३॥
एभिः स्वनिर्मितै रम्यै रचनाकुसुमोत्करैः ।
वाग्देव्या गीतिकोद्यानं शोभितं सुरभीकृतम् ॥४४॥
एतेषां कजली होली दादरा ठुमरी गजल् ।
मोहयन्ति न वा केषां हृदयानि सचेतसाम् ॥४५॥
किन्तु दौर्भाग्यदोषेण लेखकानां निजस्य वा ।
नवगीतामृतं नैतत् स्वदितं बहुभिर्बुधैः ॥४६॥
एवं दक्षिणदेशीयैर् दीक्षिताद्यैः कवीश्वरैः ।
कीर्तनानि व्यरच्यन्त कमनीयानि भूरिशः ॥४७॥
नवीनेष्वपि केषाञ्चित् चिदम्बरनिवासिनाम् ।
रम्याणि कानिचिद् गीतान्यश्रूयन्त स्वयं मया ॥४८॥
एतेषां दाक्षिणात्यानां गीतानां काचिदद्भुता ।
भव्या कार्णाटकी शैली न कस्य हृदयं हरेत् ॥४९॥
परन्तु तेषां गीतानामपि पण्डितमण्डले ।
वेत्तारो गायका वापि विरलत्वं गता इव ॥५०॥
अथ पद्येषु गीतेषु विदुषां चेदियं दशा ।
तदा किमु नु वक्तव्यं नाट्यस्य विषये पुनः ॥५१॥
नाट्यं तु सर्ववेदेभ्यो ब्रह्मणा प्रकटीकृतम् ।
ऋषिभिर्मुनिभिश्चापि प्रयुक्तं भरताज्ञया ॥५२॥[१]
न च धर्मविरोधीदं न चाकीर्तिकरं पुनः ।
न च बुद्धिहरं वापि का हानिर्नाटके ततः ॥५३॥[२]
नाट्यं गीतं च वाद्यं च त्रयं वेदोपमं स्मृतम् ।
जपादिसदृशं पुण्यं भरतस्य वचो यथा ॥५४॥
विनोदोऽपि भवेन्नूनं शिक्षया सह धर्म्यया ।
भाषाज्ञानं प्रवर्द्धेत लोके ख्यातिर्भवेत्तथा ॥५५॥

---

१–२–अवलोक्यतां नाट्यशास्त्रस्य सम्पूर्णः प्रथमोऽध्यायः ।
३—अवलोक्यतां नाट्यशास्त्रस्य ३६तमः अध्यायः ।

५

संस्कृते गीतनाट्यानां प्रचारेण स्थले स्थले ।
अपि संस्कृतभाषायाः प्रचारो विपुलो भवेत् ॥५६॥
एष्वनेकेषु लाभेषु निश्चितेष्वपि पण्डितैः ।
रुचिर्यथोचिता तत्र औत्सुक्यं वा न दृश्यते ॥५७॥
आङ्गलहिन्दीविदो नैके विद्वांसः सुप्रतिष्ठिताः ।
रमन्तेऽभिनये कामं लभन्ते च यशो बहु ॥५८॥
परं पण्डितलोकास्तु स्वतोऽभिनयकर्मणि ।
लज्जया न प्रवर्त्तन्ते प्रेरिताः प्रार्थिता अपि ॥५९॥
एवं कलाभिरेताभी रहिता बहवो बुधाः ।
नयन्ति जीवनं स्वीयं नीरसं शुष्ककाष्ठवत् ॥६०॥
अतएव च भूयोभिः सामाजिकजनैश्चिरात् ।
संस्कृतं नीरसं मत्वा सुदूरादपवर्जितम् ॥६१॥
तस्मात् संस्कृतभाषायाः प्रचारसमयेऽधुना ।
कार्यो ललितवस्तूनां प्रसारः परमादरात् ॥६२॥
श्लाघनीयः स मे काशीकृष्णाचार्यो विशेषतः ।
साहित्येन समं यस्य प्रावीण्यं गीतवाद्ययोः ॥६३॥
शिमलापाठशालाया धन्यास्तेऽध्यापकास्तथा ।
ये सर्वेऽपि मया दृष्टा उत्कृष्टा गीतवाद्ययोः ॥६४॥
तां ब्राह्मणसभां मन्ये धन्यां मुम्बापुरीस्थिताम् ।
नाटकान्यभिनीयन्ते सुबहूनि यया सदा ॥६५॥
धन्यास्तेऽपि च विद्वांसो वटपत्तनवासिनः ।
साहित्ये चापि सङ्गीते येषामभिरुचिः समा ॥६६॥
एवञ्चेत् सर्व एवापि ध्यानं दद्युः सुधीजनाः ।
आयासेन विना भाषाप्रचारः परितो भवेत् ॥६७॥
तदा तु भवतां छात्रा अपि सन्त्रासवर्जिताः ।
निःसंकोचं प्रवर्तेरन् कलासु सकलास्वपि ॥६८॥
अतो हे विबुधाः सर्वे ! लज्जां त्यक्त्वा पुरातनीम् ।
सोत्साहं सज्जितैर्भूत्वा रंगमञ्चेऽवतीर्यताम् ॥६९॥

पद्यानामथ गीतानां नाटकानां तथैव च ।
विधाय सम्यगभ्यासं निर्गच्छन्तु गृहाद्बहिः ॥७०॥
श्राव्यन्तां साधु पद्यानि गीयन्तां चारु गीतिकाः ।
नाटकान्यभिनीयन्तां ग्रामे ग्रामे स्थले स्थले ॥७१॥
स्थाप्यतां पाठशालासु सभा सङ्गीतनाट्ययोः ।
अभ्यस्यन्तां सुपद्यानि अन्विष्यान्विष्य सर्वतः ॥७२॥
बालका बालिका नार्यः शिष्याः स्वप्रतिवेशिनः ।
शिक्ष्यन्ताञ्चाखिलं सर्वे नटनर्तकगायकाः । ७३॥
आकाशवाणीद्वाराऽपि यथैतदधिकाधिकम् ।
भवेत् प्रचारितं सम्यक् तथा यत्नो विधीयताम् ॥७४॥
साहित्यसङ्गीतकला—रहितो यो हि मानवः ।
स च साक्षात् पशुर्ज्ञेयः शृङ्ग-पुच्छ—विवर्जितः ॥७५॥
इदं भर्तृहरेर्वाक्यं ज्ञात्वाऽपि यदि पण्डिताः ।
सङ्गीतादीन्युपेक्षन्ते ततो हास्यकरं नु किम् ॥७६॥
सकलासु कलास्वासु तस्मात् संस्कृतपण्डितैः ।
देववाणीप्रचाराय चारु नैपुण्यमर्ज्यताम् ॥७७॥
एवं हास्यविनोदाय सर्वेषां रञ्जनाय च ।
विद्यते बहुसामग्री हृद्या संस्कृवाङ्मये ॥७८॥
क्षेमेन्द्ररचिता ग्रन्था नीलकण्ठकृतिस्तथा ।
भोजप्रबन्धो भाणश्च पलाण्डुविजयस्तथा ॥७९॥
ग्रन्थो लोलिम्बराजस्य श्रीगुमानीकवेः कृतिः ।
हास्यार्णवो भरटकद्वात्रिंशी रासभाष्टकम् ॥८०॥
धूर्ताख्यानं मनोहारि जातकानां कथास्तथा ।
काव्यादीनां तथा भागा हास्यव्यङ्ग्ययादिसंयुताः ॥८१॥
स्फुटा हास्यरसश्लोका विनोदिन्यः कथास्तथा ।
विदूषकप्रसङ्गाश्च तथा नाना प्रहेलिकाः ॥८०॥
एतादृशं सुविपुलं वस्तुजातं मनोरमम् ।
रञ्जनं लोकचित्तानां पर्याप्तं खलु संस्कृते ॥८१॥

यदि तेषां भवेज्ज्ञानं प्रयोगोऽपि यदा तदा ।
विनोदेन समं भाषाप्रचारोऽपि भवेद् ध्रुवम् ॥८४॥
परं तादृशवस्तूनां संग्रहे वाऽनुशीलने ।
प्रमुखा अपि विद्वांसो विमुखा अवलोकिताः ॥८५॥
अतो हास्यरसश्लोकान् सुसंगृह्य यतस्ततः ।
स्वसमाजे परत्रापि तत्प्रचारो विधीयताम् ॥८६॥
हसनीयं स्वयं चैव हासनीयास्तथा परे ।
नहि हास्ये विनोदे वा दोषो भवति कश्चन ॥८७॥

कामं कर्कशतर्कशास्त्रगहने गर्जन्तु नो मे घृणा
कामं व्याकरणं रटन्तु कठिनं तेनापि दुःखं न मे ।
सङ्गीताभिनयादिकोमलकलालीलाविलासैरपि
स्वात्मानं च परं च किन्तु रमयन्त्वेषा मदीया स्पृहा ॥८८॥ ❀

## नवमः सन्देशः

( अन्यभारतीयभाषाणामध्ययने उत्कण्ठाभावमुद्दिश्य )

इदमन्यतमच्चैकं विज्ञेयं भो ममाप्रियम् ।
यन्मदीयासु पुत्रीसु बुधाः प्रीतिं न कुर्वते ॥१॥
सर्वासामपि मातॄणां कन्याः प्रियतमा मताः ।
यदि तासामुपेक्षा स्यात् कथं मातुः प्रियं भवेत् ॥२॥
भारतस्य तु याः सर्वा भाषा एता अनेकशः ।
प्रचलन्ति प्रदेशेषु ताः सर्वा मम कन्यकाः ॥३॥

---

❀ विख्यातनैयायिकैः श्री रघुनाथशिरोमणिभिस्तु अस्मिन् विषये किञ्चिदितोऽप्यधिकमुक्तम् । यथा—

पठन्ति कतिचिद्धठात् ख-फ-छ-ठेति वाचं शठाः
घटः पट इतीतरे पटु रटन्ति नैयायिकाः ।
वयं वकुलमञ्जरी-गलदपार-माध्वीकधू—
र्धुरीणपदरीतिभिर्युवतिभिर्विनोदामहे ॥

नवद्वीप महिमा (बंगला) पृष्ठ १४१

उत्तरस्य तु भागस्य या भाषाः सन्ति भूरिशः ।
कन्यात्वे ननु वक्तव्यं तासां किन्तु विशेषतः ॥४॥[1]
परं दक्षिणभागेऽपि या भाषाः सन्ति ता अपि ।
मयैव निजपुत्रीवत् पोषिताः परिवर्द्धिताः ॥५॥[2]
आसां तमिलभाषैका न मां स्निह्यति यद्यपि ।
तथापि मम भावस्तु तस्यामपि न भेदभाक् ॥६॥
एतासां कीदृशं रूपं कीदृशी च दशाऽधुना ।
भाषायामथ साहित्ये का वा कस्या विशेषताः ॥७॥
एतत्सर्वमपि प्रीत्या ज्ञेयं संस्कृतपण्डितैः ।
एकैकाऽप्यपरा भाषाऽभ्यसनीया तथैव तैः ॥८॥
अभ्यासेऽन्योन्यभाषाणां प्रवर्तेरन् बुधा यदि ।
भवेद् बहुविधो लाभस्तेषां देशस्य चाऽधुना ॥९॥
भाषाज्ञानं प्रवर्द्धेत प्रीतिः परिचयस्तथा ।
सङ्कीर्णता विनश्येच्च प्रवासे च सुखं भवेत् ॥१०॥
सम्पूर्णेऽप्यधुना देशे दक्षिणोत्तरयोस्तथा ।
ऐक्यार्थं विकलाः सन्ति सर्वे राष्ट्रहितैषिणः ॥११॥
यदि संस्कृतविद्वद्भिर्दक्षिणोत्तरवासिभिः ।
इतरेतरभाषाणां ज्ञानं सम्पाद्यतेऽधुना ॥१२॥
तदा राष्ट्रस्यैकताया इतिहासे मनीषिणाम् ।
स्वर्णाक्षरैर्विलिख्येरन्नभिधेयानि सादरम् ॥१३॥
अथ संस्कृतशब्दानां बाहुल्याद् विदुषां कृते ।[3]
अन्यभाषापरिज्ञानं सर्वथा सुकरं खलु ॥१४॥

---

१—उत्तरभारतस्य भाषा :-बँगला, उडिया, आसामी, मराठी, गुजराती, मैथिली, सिन्धी, हिन्दी, राजस्थानी, कश्मीरी प्रभृतयः ।

२—दक्षिणभारतस्य भाषा :—तमिल ( मद्रास ), तेलगू ( आन्ध्र ), कन्नड ( कर्णाटिक ), मलयालम ( केरल ) प्रभृतयः ।

३—एतद्विषये विशेषपरिज्ञानाय उदाहरणानामवलोकनाय च कार्यालयद्वारा प्रकाश्यमानः "संस्कृत और भारतीय भाषायें" इतिनामको निबन्धो द्रष्टव्यः ।

आसाञ्च गद्यपद्यानां हृद्यानां भिन्नरूपिणाम् ।
भवेदध्ययनान्नूनं विनोदः सुधियां महान् ॥१५॥
केरल्या गद्यपद्यानि अधीयेरन् बुधैर्यदि ।
नूनं मुग्धा भवेयुस्ते वाक्ये वाक्ये पदे पदे ॥१६॥
मणिप्रवालशैली सा केरलीया मनोरमा ।*
मनः कस्य रसज्ञस्य प्रसभं न हरेदहो ॥१७॥
एवमान्ध्री च कार्णाटी सुरभाषोपबृंहिता ।†
कस्य वा संस्कृतज्ञस्य हृदयं नैव मोहयेत् ॥१८॥
आन्ध्रभागवतं भव्यं कलापूर्णोदयस्तथा ।
शृङ्गारनैषधं नाम मनोज्ञचरितमेव च ॥१९॥
आमुक्तमाल्यदाद्याश्च ग्रन्थास्तेलगुभाषया ।
लिखिताः कीदृशा रम्या अहो पीयूषवर्षिणः ॥२०॥
क्वचित् क्वचिदियं भाषा संस्कृतस्यापि सौष्ठवम् ।
अतिशेत इति द्रष्टुं शक्यं भागवते यथा ॥२१॥
एवं कर्णाटभाषायाः कविपंपादिनिर्मिताः ।
कृतयः कमनीयत्वे नितराममृतोपमाः ॥२२॥
संस्कृतज्ञैर्यदीमानि नाधीतानि श्रुतानि वा ।
तदा नूनमहं मन्ये एतान् सौभाग्यवञ्चितान् ॥२३॥
अन्या तमिलभाषा तु संस्कृतस्याप्रयोगतः ।
अल्पत्वाच्चापि वर्णानां शिक्षणे विकटा खलु ॥२४॥

---

* संस्कृतभाषायाः सुबन्ततिङन्तपदैः समन्वितया केरलीयभाषया निबद्धा गद्यपद्यमयी रचना मणिप्रवालमित्युच्यते । इमां शैलीमवलम्ब्य केरलीयैः कविभिर्बहूनि काव्यानि विरचितानि ।
अस्मिन् विषये विशेषपरिज्ञानाय "प्राचीन मणिप्रवालम्" इति नामको मलयालमभाषाया निबन्धः श्री पी० के० नारायण पिल्लै महोदयप्रणीतो द्रष्टव्यः ।

† आन्ध्रभाषायाः कर्णाटकभाषायाश्च प्राचीने साहित्ये प्रायः सर्वेऽपि ग्रन्थाः संस्कृतशब्दबहुलाः सन्ति । वर्तमानसाहित्येऽपि इयं शैली सर्वथा परिहृता नास्ति ।
एतादृशाः सर्वे ग्रन्थाः कार्यालये आगत्य एकत्रैव द्रष्टुं शक्यन्ते ।

अस्यास्तथापि भाषायाः पूर्णं प्राचीनमेव च ।
विशालं किल साहित्यं नूनं दृश्यं मनीषिभिः ॥२५॥
अथास्याः खलु भाषाया निसर्गमधुरा गिरः ।
श्रोतुः श्रुतिपुटे नूनं भरन्ति मधुरं मधु ॥२६॥
एवमेव महाराष्ट्रया मोरोपन्तादिनिर्मिताः ।
अद्भुताः कृतयोऽवश्यं द्रष्टव्या रसिकैर्बुधैः ॥२७॥
अथ वङ्गीयभाषायाः सौन्दर्यं केन वर्ण्यताम् ।
यत्र साक्षाद् रवीन्द्राद्या वन्द्या विश्वकवीश्वराः ॥२८॥
अस्यान्तु खलु भाषायां यावनीषु कृतिष्वपि ।
बहु संस्कृतशब्दानां सुलभा ललितावलिः ॥२९॥*
अथ मैथिलभाषाया विद्यापतिपदावली ।
कीदृशी ललिता रम्या मधुरा मधुवर्षिणी ॥३०॥
औत्कल्याः कविसूर्यस्य पठिताः कृतयो यदि ।
नूनं प्रफुल्लितानि स्युर्हृत्पद्मानि मनीषिणाम् ॥३१॥
एवं गुर्जरभाषाया वोटादकरनिर्मिता ।
कस्य नो हरते चेतो ललिता कवितावलिः ॥३२॥
एवं सर्वा इमा भाषा भारतीया मनोहराः ।
तास्वेका वाऽधिका वापि ज्ञेया नूनं मनीषिभिः ॥३३॥
अष्टादशानां भाषाणां ज्ञातारो यत्र वाऽभवन् । †
द्वित्राणां शिक्षणे तत्र सन्त्रासो नु कथं भवेत् ॥३४॥
देवनागरलिप्याश्चेत् प्रयोगो विपुलो भवेत् ।
अन्यभाषापरिज्ञानं नितान्तं सरलं भवेत् ॥३५॥$

---

* यथा श्री नजरुल इस्लाम प्रभृतियवनकवीनां रचनासु ।

† यथा साहित्यदर्पणकारो विश्वनाथः स्वग्रन्थे आत्मानं बहुधा "अष्टादशभाषावारविलासिनीभुजङ्गम" इति विशेषयति ।

$ अस्मिन् विषये "भारतीय भाषायें तथा देवनागरी लिपि" इति नामकं कार्यालयाल्लभ्यं लेखकप्रणीतं पुस्तकमवलोकनीयम् ।

अतः सम्भूय विद्वद्भिः सर्वैर्भारतवासिभिः ।
तदर्थमपि कर्तव्यः प्रयत्नो विपुलः सदा ॥३६॥
एषा संस्कृतभाषा च तथैषा नागरी लिपिः ।
एतद् द्वयं भारतस्य दृढमेकत्वसाधकम् ॥३७॥
उभयोरेतयोर्देशे प्रचारे यदि पण्डिताः ।
निरताः स्युस्तदा लाभो देशस्य सुमहान् भवेत् ॥३८॥
अथ चैतासु भाषासु द्वित्राणामपि शिक्षणात् ।
विदुषामपरोऽप्येको महान् लाभो भविष्यति ॥३९॥
आसु प्रान्तीयभाषासु तत्तद्भाषामनीषिभिः ।
लेखाः संस्कृतसम्बन्धे लिखिता बहवोऽद्भुताः ॥४०॥
पठेयुस्तानपि ग्रन्थान् यदि संस्कृतपाठकाः ।
तेषां संस्कृतसम्बन्धि ज्ञानं स्यादधिकं ततः ॥४१॥
पश्यन्तु वङ्गभाषायां रवीन्द्रेण कवीन्दुना ।
कति संस्कृतसम्बन्धे सुनिबन्धाः प्रकाशिताः ॥४२॥
सर्वं प्राचीनसाहित्यं कालिदासकृतींस्तथा ।
कादम्बरीं तथालम्ब्य रसधारा प्रवाहिता ॥४३॥
श्री श्रीहरप्रसादेन शास्त्रिणैकेन केवलम् ।
कालिदासीयकाव्येषु लिखिता लेखराशयः ॥४४॥*
श्रीमद्गुरुपदाख्येन हाल्दारेण मनीषिणा ।
कीदृग् व्याकरणेऽपूर्वो निबन्धो लिखितो महान् ॥४५॥
संस्कृतज्ञेन येनैते ग्रन्था नैवावलोकिताः ।
मन्ये, संस्कृतसाहित्यस्वादेभ्यस्ते नु वञ्चिताः ॥४६॥
एवं संस्कृतसम्बन्धे भाषासु निखिलास्वपि ।
मननीयनिबन्धानां प्राचुर्यं चारु विद्यते ॥४७॥
अतः संस्कृतविद्वद्भिरन्या भाषाश्च काश्चन ।

---

* अवलोक्यतां वङ्गभाषायाः "वसुधारा" मासिक पत्रिकायां "हरप्रसाद शास्त्री ओ कालिदासेर व्याख्या" इति शीर्षकेण प्रकाशितो निबन्धः ।
( अक्टूबर, नवम्बर १९६० )

दृष्ट्वा वहुविधान् लाभानभ्यस्यन्तां नवा नवाः ॥४८॥
एवमेवांग्लभाषायाः फ्रेन्चजर्मनभाषयोः ।
तथा रूसीयभाषाया अप्यध्ययनमिष्यते ॥४९॥
एतासु खलु भाषासु वैदेशिकमनीषिभिः ।
ये ये ग्रन्थास्तथा लेखा लिखिता उत्तमोत्तमाः ॥५०॥ ❀
यावन्तो ते विलोक्यन्ते नहि संस्कृतपण्डितैः ।
तेषामध्ययनं तावत् पूर्णं मन्तुं न शक्यते ॥५१॥
अहो तपस्विता तेषामहो पुरुषकारिता ।
अहो विद्यानुरागश्च तेषां त्रिभुवनोत्तरः ॥५२॥
यदेतैर्भारतीयाया विद्यायाः संस्कृतेस्तथा ।
नहि क्षुद्रतमोऽप्यंशः कश्चित्त्यक्तो विवेचने ॥५३॥
अतः संस्कृतविद्वद्भिः सर्वैरपि वयोऽधिकैः ।
काचिदेतासु भाषासु भाषैका शिक्ष्यतां ध्रुवम् ॥५४॥
स्वस्वविषयसम्बद्धान् सर्वान् ग्रन्थानधीत्य च ।
पुनस्तत्र विधातव्या युक्तायुक्तविचारणा ॥५५॥
आंग्ल्यान्तु भारतीयैरप्यनेकैर्मान्यपण्डितैः ।
ग्रन्थाः संस्कृतसम्बन्धे निबद्धा वहवोऽद्भुताः ॥५६॥
अथ शोधप्रधानासु पत्रिकास्वप्यहर्निशम् ।
बहुलेखाः प्रकाश्यन्ते पठनीया मनीषिभिः ॥५७॥†

---

❀ भारतीय-भाषा-साहित्य-संस्कृति-सम्बन्धे वैदेशिकभाषानिबद्धपुस्तकानां परिज्ञानाय निम्नाङ्कितस्थानानां सूचीपत्राणि द्रष्टव्यानि—

१—मोतीलाल बनारसी दास, पटना, वाराणसी, दिल्ली ।
२—चौखम्भा विद्याभवन, वाराणसी ।
३—ओरिएन्टल बुक एजेन्सी, पूना ।
४—भारतीय विद्याभवन, चौपाटी, बम्बई ।
५—अदयार लाइब्रेरी, अदयार, मद्रास ।

† संस्कृतसम्बद्ध-शोधपत्रिकाणां विषये परिशिष्टभागो द्रष्टव्यः ।

ते ते ग्रन्था निबन्धा वा ज्ञायन्ते नैव पण्डितैः ।
इति मे रोचते नैव बहु कष्टं च जायते ॥५८॥
यदि ग्रन्था अधीयेरन्नेते संस्कृतपण्डितैः ।
नूनं तेषां विनोदः स्यात् ज्ञाने वृद्धिस्तथैव च ॥५९॥
काशीस्थे सुरभाषाया विश्वविद्यालयेऽधुना ।
कृता विदेशभाषाणां शुभा शिक्षणयोजना ॥६०॥
अत्र तिब्बत-वर्मीय-श्याम-सिंहल-देशजाः ।
भाषा अपि यथाकामं शक्यन्ते शिक्षितुं बुधैः ॥६१॥
भाषास्वेतासु भूयांसो बौद्धग्रन्थाः सुदुर्लभाः ।
अनूदिता मौलिका वा लभ्यन्ते सुप्रकाशिताः ॥६२॥
तेषामध्ययनार्थन्तु बौद्धवाङ्मयपाठकैः ।
एतासामपि भाषाणामभ्यासः क्रियतां ध्रुवम् ॥६३॥
एवं चीनीयभाषाऽपि भाषाज्ञानाय पण्डितैः ।
राजनैतिकदृष्ट्या च नूनं ज्ञेया विशेषतः ॥६४॥
भाषाविज्ञानदृष्ट्या तु पठनीया मनीषिभिः ।
अवेस्ता-फारसी-पस्तोभाषा अपि यथाबलम् ॥६५॥
आसुभाषास्वपभ्रंशान् संस्कृतस्य बहूनहो ।
दृष्ट्वा जायेत विदुषामानन्दो विस्मयस्तथा ॥६६॥ ❀
अथासां यदि भाषाणां सम्यग् ज्ञानं न जायते ।
लिपिज्ञानन्तु कासाञ्चित् कार्यमेव सुनिश्चितम् ॥६७॥

किं पण्डिता अथ विशेषविकल्पजालैः
संकल्प एष हृदये त्वरितं विधेयः ।

---

❀ एतदर्थं निम्नाङ्किता ग्रन्था अवलोकनीयाः—

१—फारसी में संस्कृत ( भाषानुसन्धान भवन, देवरिया )

२—Comparative Grammar of the sanskrit, gend, qreek, latinetc.

३—अवेस्ताभाषायाः शब्दकोशाः व्याकरणं च ।

अद्यैव काऽपि च यथारुचि नव्यभाषा
आरभ्यतां यदि समीहितसाधनं स्यात् ॥

## दशमः सन्देशः

( भाषणे लेखने वार्तालापादौ च पाटवस्याभावमुद्दिश्य )

इदं दृष्ट्वाऽपि मे लज्जा महती जायते हृदि ।
बहवो भाषणे लेखे पटवो न भवन्ति यत् ॥१॥
तादृशा एव भूयांसः सन्ति संस्कृतपण्डिताः ।
भाषितुं लिखितुं हिन्द्यां संस्कृते वा न ये क्षमाः ॥२॥
नाक्षराणि सुरम्याणि न भाषाऽशुद्धिवर्जिता ।
न वा मनोहरा भावा भवन्ति भवतामहो ॥३॥
बहूनां विदुषां लेखे बहूनामथ भाषणे ।
वार्तालापे बहूनां च देहकम्पः प्रजायते ॥४॥
बहूनां पण्डितानां तु तादृशी जायते दशा ।
यादृगासीत् कुरुक्षेत्रे दशा गाण्डीवधन्वनः ॥५॥[1]
प्रभावाद् भाषणस्यापि प्रभावाल्लेखनस्य च ।
बहुकार्याणि सिद्ध्यन्ति यशश्च बहु जायते ॥६॥
परन्तु व्यवहारिक्याः शक्तेरस्या अभावतः ।
व्यवहारे महान्तोऽपि क्लिश्यन्ति बहुधा बुधाः ॥७॥
अनेन कारणेनैव शंकिता भीतचेतसः ।
पण्डिता नाग्रतो यान्ति सभासम्मेलनादिषु ॥८॥
न वक्तुं लिखितुं सम्यक् न च बोधयितुं परान् ।
शक्यन्ते पण्डितास्तेन प्रायस्तिष्ठन्ति पृष्ठतः ॥९॥
बह्वीनां पाठशालानामुत्सवेषु मयेक्षितम् ।
सभासञ्चालनं कर्तुं पारयन्ति न पण्डिताः ॥१०॥

---

१—मातृभाषाया उपलक्षणमेतत् ।

संस्थापरिचयं दातुं प्रस्तोतुमनुमोदितुम् ।
धन्यवादं प्रदातुं वा न सम्यक् शक्नुवन्ति ते ॥११॥
बहु संस्कृतसंसत्सु अन्यभाषाविदो बुधाः ।
प्रभाषन्ते, परं तत्र मूकास्तिष्ठन्ति पण्डिताः ॥१२॥
संस्कृतस्यापि विषये संस्कृतस्यैव पण्डिताः ।
भाषितुं न क्षमन्ते चेत् कथं जीवन्ति ते बुधाः ? ॥१३॥
यद्यपि प्रौढवक्तृत्वं सर्वेषां नैव जायते ।
परं सामान्यशक्तिस्तु सर्वेषामप्यपेक्ष्यते ॥

अथ च—

अथ संस्कृतसम्बन्धे वृत्तपत्रेषु साम्प्रतम् ।
प्रकाश्या विविधा लेखाः सुप्रचाराय पण्डितैः ॥१४॥
परन्तु विषयाज्ञानात् लेखशक्तेरभावतः ।
लघोरपि न लेखस्य लेखने पण्डिताः क्षमाः ॥१५॥
चिरं जीवन्तु ते धन्या आङ्गलहिन्दीविदो बुधाः ।
अन्यभाषाविदश्चैव वर्धन्तामुत्तरोत्तरम् ॥१६॥
ये निजप्रौढलेखन्या लेखान् मद्विषये बहून् ।
लिखित्वा वृत्तपत्रेषु मत्प्रचारं वितन्वते ॥१७॥
परं पण्डितजीवास्तु पत्रमप्येकमुत्तमम् ।
लिखितुं न क्षमा यत्र तत्र लेखस्य का कथा ॥१८॥
लेख-व्याख्यान-वार्तादौ पाटवस्योपलब्धये ।
विधयः सन्ति भूयांसः प्रोक्ताः संस्कृतवाङ्मये ॥१९॥
चरके चाऽर्थशास्त्रे च न्यायग्रन्थेषु भूरिषु ।
काव्यनाटकसाहित्य-पुराणादिषु च स्फुटम् ॥२०॥ ❀

---

❀ यथा—

१—चरकसंहितायाः विमानस्थाने अष्टमोऽध्यायः ।
२—कौटलीयार्थशास्त्रस्य अध्यक्षप्रचारे शासनाधिकरणे दशमोऽध्यायः ।
३—महाभारतस्य शान्तिपर्वणि ३२५ तमोऽध्यायः । (अग्रेऽपि)

पण्डिता बहवो, मन्ये, अर्थचिन्तातुराः सदा ।
योग्या अपि न लेखादौ प्रवर्तन्ते कदाचन ॥२१॥
परं ये तु लभन्तेऽद्य सहस्रं वा शतानि वा ।
तैः कथं नहि लिख्यन्ते लेखाः साधारणा अपि ॥२२॥
विदुषां लेखनाभावात् संस्कृतस्यापि पत्रिकाः ।
प्रायो लेखाय सीदन्ति कष्टान्यनुभवन्ति च ॥२३॥
एवञ्च संस्कृताचार्या लेखव्याख्यानदुर्बलाः ।
कारयन्त्युपहासं मे सभासम्मेलनादिषु ॥२४॥
पण्डिता एव वर्तन्ते अयोग्या ईदृशा यदा ।
लेखव्याख्यानसामार्थ्यं छात्रेषूत्पद्यतां कथम् ॥२५॥
अतो हे विबुधाः सर्वे नवीनाश्च विशेषतः ।
यतन्तामस्य दोषस्य नाशे शपथपूर्वकम् ॥२६॥
स्थाप्यतां वादसमितिः चाल्यतां पाक्षिकी सभा ।
शिक्ष्यन्तां निखिलाश्छात्रा वादव्याख्यानकौशलम् ॥२७॥
दीयतां लेखने ध्यानं छात्रैरध्यापकैस्तथा ।
पत्रिका हस्तलिखिता स्थाने स्थाने प्रकाश्यताम् ॥२८॥
एको लेखः समीचीनो लघीयानपि पण्डितैः ।
लेखनीयो यथाशक्ति प्रतिमासं निरन्तरम् ॥२९॥
हिन्दी-संस्कृतपत्रेषु प्रेषणीयाश्च तेऽखिलाः ।
तदर्थञ्चावशेष्यन्तां कतिचिन्नूतनाः पणाः ॥३०॥
अथवा प्रेषणेऽशक्तौ आलस्ये वा गरीयसि ।
कार्यालये एव सर्वे लेखाः प्रेष्याः मनीषिभिः ॥३१॥

---

४—काव्यमीमांसाया अनेकेऽध्यायाः ।

५—न्यायग्रन्थानां वादप्रकरणानि ।

६—स्कन्दपुराणस्य महेश्वरखण्डे ४५ तमोऽध्यायः ।

७—श्री पं० बलदेवमिश्र विरचितं "गपसप विवेक" नामकं मैथिली-भाषानिबद्धं पुस्तकं यत्र संस्कृतग्रन्थानां बहूनि उद्धरणानि वर्तन्ते ।

अथ वक्तृत्वशक्तिञ्च लब्ध्वाऽभ्यासादनुत्तमाम् ।
निर्धना अपि गर्जन्तु श्रीदामोदरभट्टवत् ॥३२॥*

वाक्छक्तिर्यन्मुखे नास्ति लेखशक्तिः करे तथा ।
महामहोपाध्यायोऽपि स विद्वान् किं करिष्यति ॥३३॥

पूजापाठ-जपप्रयोग-तिलकालङ्कार चर्चादिषु,
भूयांसं समयं नयन्ति सुधियः स्वर्लोकलाभाशया ।
व्याख्यालेखनपाटवे पुनरिह प्रत्यक्षलाभप्रदे,
न ध्यानं ददतीत्यहो मतिमतामेषा विचित्रा स्थितिः ।३४।

## एकादशः सन्देशः

(विद्यार्थिषु आवश्यकगुणानां तथाऽदर्शस्वरूपस्य चाभावमुद्दिश्य)

अथाप्यवगुणाः केचिद् भवद्विद्यार्थिनामपि ।
हेतवो मम दुःखेऽस्मिन् सदा चोद्वेगकारिणः ॥१॥

न तेषु कश्चिदादर्शो नियमो वा विलोक्यते ।
ये यथैव समीहन्ते आचरन्ति तथैव ते ॥२॥

कञ्चुकं वीटिकाहीनं धौतं निर्मुक्तबन्धनम् ।
शिरः शिखासमाकीर्णं वटूनामवलोक्यते ॥३॥

तमालभक्षणे केचित् केचित् केशप्रसाधने ।
केचिच्चाश्लीलगानेषु रमन्ते हन्त निस्त्रपम् ॥४॥

न सन्ध्या क्रियते सर्वैः तिलकं वा न धार्यते ।
वेषभूषादिके चापि परानुकरणे रताः ॥५॥

---

* यथा केरलीयेन विदुषा दामोदरभट्टेन कस्याञ्चित् सभायां कथितम्—
नो छत्रं, न तुरङ्गमो, न वदतां वृन्दानि, नो वन्दिनो,
न श्मश्रूणि, न फालपट्टवसनं, न ह्यम्बराडम्बरम् ।
अस्त्यस्माकममन्दमन्दरगिरि-प्रोद्धूतदुग्धोदधि—
प्रेङ्खद्वीचिपरम्परापरिणता वाणी तु नाणीयसी ॥
Tne contribution of kerala to sanskrit literture पृ०८६

न व्यायामस्य नियमः क्रीडाकूर्दनयोर्न वा ।
दृश्यते पाठशालासु न च तत्साधनादिकम् ॥६॥
दैहिकोऽपि ततस्तेषां विकासो नैव जायते ।
हर्ष-स्फूर्ति-समुल्लासा अपि नो दृष्टिगोचराः ॥७॥
राष्ट्रियेषु न कार्येषु न च सामाजिकेषु वा ।
समुत्साहोऽनुरागो वा दृश्यते तेषु कुत्रचित् ॥८॥
न व्याख्याने न वा लेखे मिलने स्वागतेऽपि वा ।
साधारणे वा वार्तादौ पाटवं नैव दृश्यते ॥९॥
बहुसंस्कृतशालासु भ्रमणावसरे मया ।
दृष्टा लुकायिताश्छात्राः वार्तालापभयादहो ॥१०॥
सन्तोषरहिताः सर्वे सर्वे चादानलोलुपाः ।
सर्वे व्यग्रा विलोक्यन्ते समायाते निमन्त्रणे ॥११॥
स्वच्छता चापि वस्त्रादेः स्थानादीनां परिष्कृतिः ।
पार्श्वभूमेश्च रम्यत्वं जायते नाक्षिगोचरम् ॥१२॥
विनयो गुरुशुश्रूषा सेवाभावो महीयसाम् ।
आदेशकारिता चैते गुणा अपि लयं गताः ॥१३॥
येभ्यः संस्कृतिरक्षाया आशा लोकैर्विधीयते ।
न तेषां व्यवहारेषु संस्कृतिः क्वापि दृश्यते ॥१४॥
केचिन्नितान्तं प्राचीनाः केचिदत्यन्तनूतनाः ।
केचित्तूभयथा भ्रष्टाश्छात्रा दृष्टिपथं गताः ॥१५॥
छात्रावासेषु तिष्ठत्सु छात्रेष्वपि मनोहराः ।
विशिष्टा नियमाः केचिन्नास्माभिरवलोकिताः ॥१६॥
एवं केचिद् गुणाः, किञ्चिद् वैशिष्ट्यं, काऽपि सभ्यता ।
किञ्चिदाकर्षणं चापि छात्रेषु न विलोक्यते ॥१७॥
अतस्ते लज्जिता भीताः शंकिताः कुण्ठिता इव ।
स्वाभिमानविहीनाश्च दृश्यन्ते प्रायशः सदा ॥१८॥
भवद्विद्यार्थिनामेतां दुरवस्थां विलोक्य मे ।
यादृशं जायते कष्टं वचसां तदगोचरम् ॥१९॥

इमामवस्थां छात्राणामुच्चकक्षाजुषामपि ।
दृष्ट्वा मदीयं हृदयं शतधा भिद्यते ननु ॥२०॥
देशोन्नतेर्महान् भारो येषामुपरि वर्तते ।
आदर्शा ये च लोकस्य अहो तेषामियं दशा ? ॥२१॥
जीविष्यन्ति कथन्त्वेते सुखसम्मानपूर्वकम् ।
सङ्घर्षयुग एतस्मिन्निति चिन्ता गरीयसी ॥२२॥
अतः केनापि कल्पेन तथा यत्नो विधीयताम् ।
यथाप्नुयुर्भवच्छिष्याः सर्वाङ्गीणां समुन्नतिम् ॥२३॥

तथा च—

छात्रा यद्यपि लभ्यन्ते केचिद् योग्यतमा अपि ।
परं तादृशछात्राणां संख्या नैव महीयसी ॥२४॥
अथ ये खलु दृश्यन्ते छात्राः केचिद् भविष्णवः ।
तेऽपि प्रोत्साहनाऽभावात् उत्कर्षं प्राप्नुवन्ति नो ॥२५॥
छात्राणां योग्यतावृद्धयै चित्तोत्कर्षाय वा पुनः ।
योजना वा प्रयत्नो वा न कश्चिदवलोक्यते ॥२६॥
"मूर्खा एव तु सर्वेऽपि दीना हीनास्तथैव च ।
पठितुं पाठशालासु छात्रा आयान्ति, नोत्तमाः ॥२७॥"
इत्येषाऽपि मया चर्चा सर्वेषां विदुषां मुखात् ।
श्रूयते हन्त यच्छ्रुत्वा शरीरं ज्वलतीव मे ॥२८॥
अभव्यैरीदृशैर्भावैः हीनैः सम्बोधनैस्तथा ।
नीयन्ते हीनताभावं छात्रा विद्वद्वरैः स्वयम् ॥२९॥
अनेनैव च दोषेण छात्रैर्योग्यतमैरपि ।
आत्मनो विषये किञ्चिद् गौरवं नानुभूयते ॥३०॥
तस्मादेतादृशान् भावान् दूरे कृत्वा मनीषिभिः ।
उत्कर्षभावनाऽनेया विद्यार्थिषु लघुष्वपि ॥३१॥
नीच-मूर्ख-महामूर्ख-लण्ठ-दुष्टेतिभाषणैः ।
गालिभिश्चापि सम्बोध्याश्छात्रा नैव कदाचन ॥३२॥

तथा च यत्नः कर्तव्यो यथा छात्रगणेऽखिले ।
आदर्शरूपता भव्या आगच्छेदधिकाऽधिका ॥३३॥

तथा हि—

सुवेषः स्वास्थ्यसम्पन्नः सदाचारसमन्वितः ।
विद्योतितललाटाङ्गो ब्रह्मचर्येण भास्वता ॥३४॥
सेवाऽतिथ्यादिके दक्षः स्वावलम्बी परिश्रमी ।
उच्चलक्ष्यो विनीतात्मा दम्भपाखण्डवर्जितः ॥३५॥
अधीयमाने विषये सुयोग्यः प्रतिभानवान् ।
संस्कृते मातृभाषायां लेख-व्याख्यानशक्तियुक् ॥३६॥
व्यवहारे सुनिपुणः पत्राद्यैर्देशकालवित् ।
विषयाणां नवीनानामपि सामान्यवेदकः ॥३७॥
मन्वादिधर्मशास्त्राणां वेदोपनिषदां तथा ।
आवश्यकज्ञानयुतः परधर्मिकुचक्रवित् ॥३८॥
धर्माचारप्रचारार्थमुत्पन्नोऽस्मीति चिन्तकः ।
सामाजिककुरीतीनां संस्कर्ताऽधर्मबाधकः ॥३९॥
ग्रामे देशे विदेशेषु भारतीयार्यसंस्कृतेः ।
विश्वकल्याणकारिण्याः प्रचारणपरायणः ॥४०॥
कथं नः पतनं जातमुन्नतिश्च कथं भवेत् ।
मयाऽत्र किमनुष्ठेयमितिचिन्तासमन्वितः ॥४१॥
एतादृशानां छात्राणां निर्माणाय निरन्तरम् ।
सर्वाभिः पाठशालाभिः पूर्णयत्नो विधीयताम् ॥४२॥

अथ च—

भो भो विद्यार्थिनः सर्वे युष्माकं क्व गता मतिः ।
अन्धीभूता यथा यूयं स्वहितं नैव पश्यथ ॥४३॥
दक्षिणाभिस्तथा दानैः क्षेत्रे क्षेत्रेऽन्नभोजनात् ।
युगेऽस्मिन् भवतां वृत्तिः कियत्कालं चलिष्यति ॥४४॥
अनेन वः स्वभावेन तथा योग्यतयाऽनया ।
निर्वाहोऽसम्भवो नूनं प्रतिस्पर्धायुगेऽधुना ॥४५॥

लब्ध्वा संकुचितं ज्ञानं व्यवहारेऽपि दुर्बलाः ।
भीरवो भाषणे लेखे कथं कुत्र गमिष्यथ ॥४६॥
दृष्ट्वा देशं तथा कालम् आत्मनोऽयोग्यतां तथा ।
स्वयमेवात्मनिर्माणे यत्नश्छात्रैर्विधीयताम् ॥४७॥
"कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥४८॥"
इत्याचार्यवरस्यार्यचाणक्यस्य वचोऽमृतम् ।
धृत्वा मनसि लोकेऽस्मिन् वर्तितव्यं विपश्चिता ॥४९॥
अस्मिन्नुदासते कार्ये यदि वो गुरवोऽलसाः ।
भवद्भिः स्वहितं दृष्ट्वा स्वयं यत्नो विधीयताम् ॥५०॥
भवन्तः स्वीययत्नेन अर्जित्वा निखिलान् गुणान् ।
साधयन्तु समाजे स्वं नूनं नागरिकोत्तमम् ॥५१॥
भविष्यस्य कृते चापि नैराश्यं माऽवलम्ब्यताम् ।
सर्वदैव सुखं सिद्धिः योग्यानां श्रमिणां कृते ॥५२॥
महत्त्वेऽथ गते चांग्ल्या हिन्द्याश्चापि समागते ।
उत्कर्षो भविता नूनं भवतां नाऽत्र संशयः ॥५३॥
अतो भवद्भिर्योग्यत्वं वैशिष्ट्यं व्यवहारिता ।
अर्जनीया प्रयत्नेन विधाय दृढनिश्चयम् ॥५४॥
"सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥५५॥"
इति यन्मनुना प्रोक्तं तत्सर्वं व्यवहारतः ।
छात्रैरध्यापकैश्चापि चरितार्थं विधीयताम् ॥५६॥
अयोग्या संस्कृतच्छात्रा भवन्तीति जनश्रुतिः ।
मूलान्निर्मूलनीयाऽशु योग्यतायाः प्रदर्शनात् ॥५७॥
यथा च शिक्षया सार्द्धं तथा योग्यतया सह ।
संस्कृतिश्च समागच्छेत् तथा यत्नो विधीयताम् ॥५८॥
संस्कृतज्ञानसम्पन्ने नरनारीगणेऽखिले ।
इष्यते काऽपि सर्वोच्चा सभ्यता संस्कृतिस्तथा ॥५९॥

तस्मादध्यापकश्छात्रैरधिकारिभिरेव च ।
विषयेष्वेषु सर्वेषु ध्यानं देयं विशेषतः ॥६०॥
अमूल्यं जीवनञ्चेदं छात्राणां राष्ट्रसम्पदाम् ।
नाशनीयं न वा नश्यद् द्रष्टव्यं मौनधारिभिः ॥६१॥

विद्यार्थिनो यदि न हन्त भवन्ति विज्ञा
विद्यासु, शिष्टचरिता, व्यवहारदक्षाः ।
किं तेन हन्त पठितेन किमु श्रमेण
विद्यालयेन किमु वा किमु पण्डितेन ॥६२॥ ※



※ १—अस्मिन् विषये कार्यालयात् "संस्कृतच्छात्राणां प्रतिज्ञाः" "संस्कृतच्छात्राणां पालनीयाः सदाचाराः" इत्यादिनामभिः प्रकाशितानि पत्त्राण्यपि अवलोकनीयानि अवलम्बनीयानि च सर्वेषु विद्यालयेषु छात्रावासेषु च ।

२—वाराणसेयसंस्कृतविश्वविद्यालयस्य दीक्षान्तभाषणानि च पठनीयानि ।

# देश-समाज-सेवाविषयकम्

## चतुर्थं प्रकरणम्

### प्रथमः सन्देशः

( धर्मप्रचारे सामाजिकदोषाणां निराकरणे च प्रवृत्तेरभावमुद्दिश्य )

इदं तु परमं दुःखं मन्यतां मम पण्डिताः ।
कार्यं धर्मप्रचारस्य यद् भवन्तो न कुर्वते ॥१॥
देशे धर्मप्रचारस्याऽधर्मनाशस्य चोभयोः ।
मुनिभिर्निखिलो भारो भवत्स्वेव प्रतिष्ठितः ॥२॥
या याः कुरीतयो देशे तथा याश्च कुरूढयः ।
तासां निवारणं यत्तु भवतामेव कर्म तत् ॥३॥
अयञ्चापि निजो धर्मो भवद्भिर्विस्मृतोऽधुना ।
अतः समाजे सर्वत्र धर्मह्रासो विलोक्यते ॥४॥

तथा हि—

आश्रमाणामव्यवस्था, विवाहो बालवृद्धयोः ।
कन्यानां विक्रयश्चापि, मादकद्रव्यसेवनम् ॥५॥
भिक्षादानमदीनेषु, साधुज्ञानमसाधुषु ।
पाखण्डिनां वञ्चकानां सम्मानश्चापि सर्वशः ॥६॥
मठ-मन्दिर-तीर्थानां तदीशानां च दुःस्थितिः ।
सन्यासि-साधुवर्गेषु कामिनीकाञ्चनस्पृहा ॥७॥
अस्पृश्यानां महान् क्लेशो विधवानामुपेक्षणम् ।
जातिच्युत-नृनारीणामप्रवेशः स्वजातिषु ॥८॥
दीक्षागुरूणां मूर्खत्वं, मन्त्राऽज्ञत्वं पुरोधसाम् ।
नेतृणां शासकानाञ्च स्वार्थसाधननिष्ठता ॥९॥
संस्कार-यज्ञ-पूजादिकर्मणां विधिहीनता ।
अपव्ययो विवाहोपनयनश्राद्धकर्मसु ॥१०॥

भूत-प्रेत-पिशाचादेः पूजनं सर्वतोदिशम् ।
स्त्रीणां चातिशयश्रद्धा पीरपैगम्बरादिषु ॥११॥
भृशमार्थिकवैषम्यं, वर्णानामुच्चनीचता ।
विविधा भेदभावाश्च वर्गजात्युपजातिषु ॥१२॥
प्रचारश्चलचित्राणां, वेश्यावासः पुरे पुरे ।
दूषितं खाद्यपानादि, यूनामविनयस्तथा ॥१३॥
अभावः शुद्धवस्तूनां, मिश्रणं सर्ववस्तुषु ।
प्रयोगो धर्मकृत्येषु वनस्पतिघृतस्य च ॥१४॥
प्रचारोऽश्लीलचित्राणां, सौन्दर्यप्रतियोगिता ।
क्रये शृङ्गारवस्तूनां देशस्य विपुलो व्ययः ॥१५॥
फिल्मीगीतानि सर्वत्र, धूमपानं मुखे मुखे ।
द्विजेष्वपि सुरापानं, गाँजापानं च साधुषु ॥१६॥
विद्यालयेषु कन्यानां युवकैः सहशिक्षणम् ।
युवतीनां स्वश्रृङ्गार-चाकचिक्यप्रदर्शनम् ॥१७॥
असंख्यानां द्विजातीनां गायत्रीज्ञानशून्यता ।
पंक्तिपावनविप्राणामपि मांसादिभक्षणम् ॥१८॥
नदीतटेषु मूर्खाणां पण्डानां कर्मकाण्डता ।
सत्ता सखीसमाजस्य भक्तिव्याजादनैतिकी ॥१९॥
नृत्येष्वश्लीलसम्वादैरश्लीलैश्च प्रदर्शनैः ।
प्रचारोऽश्लीलभावानां बालेषु तरुणेषु च ॥२०॥
प्रायः पुस्तकपत्रेषु तिथिपत्रेषु दर्पणे ।
सर्वत्रैव सुरम्याणां स्त्रीचित्राणां प्रकाशनम् ॥२१॥
प्रायेणाऽनुचिते स्थानेऽनुचितेऽवसरे तथा ।
देवीदैवतचित्राणां स्वलाभाय प्रकाशनम् ॥२२॥
ब्राह्मणानां मिथो युद्धं मत्स्यमारणहेतवे ।
शैव-वैष्णव-साधूनामीर्ष्या द्वेषः परस्परम् ॥२३॥
बालवैधव्ययुक्तानां युवतीनां निरन्तरम् ।
व्यभिचारोऽपहारो वा हिन्दुभिर्यवनैस्तथा ॥२४॥

एते सर्वे दुराचारा आर्यजातिविनाशकाः ।
धर्मसंस्कृतिसिद्धान्त-विरुद्धाः शास्त्रगर्हिताः ॥२५॥
परन्त्वेषां विनाशाय धर्मसंस्थापनाय च ।
किमु पण्डितमूर्धन्यैरपि किञ्चिद् विधीयते ॥२६॥
अनर्थान् सकलानेतान् पश्यन्तोऽपि दिवानिशम् ।
निश्चेष्टाः पण्डिताः सन्ति मूकान्धवधिरा इव ॥२७॥
विधिना ब्राह्मणाः सृष्टा धर्मकोशस्य गुप्तये । ॐ
विनश्यन् किन्तु कोशोऽयं पण्डितैः किमु रक्ष्यते ॥२८॥
चातुर्वर्ण्यव्यवस्थाया आदिसंस्थापको मनुः ।
धर्मान् शिक्षयितुं प्राह पृथिव्यां सर्वमानवान् ॥२६। †
परं पृथिव्याः का वार्ता स्वदेशे स्वपुरेऽपि वा ॥
प्रतिवेशेऽपि वा विज्ञैश्चारित्र्यं शिक्ष्यते नु किम् ॥३०॥
स्वकर्तव्यपरित्यागः पण्डिता भवतामयम् ।
ह्रासे हिन्दूसमाजस्य सुमहत् कारणं मतम् ॥३१॥
हिन्दूसमाजे व्याप्तानां दोषाणां बहुभिर्दिनैः ।
विनाशाय यतन्तेऽद्य भूयांसो देशवासिनः ॥३२॥
परन्तु भवतामेव ध्यानं तत्र न गच्छति ।
भवद्भिर्न च सम्भूय कश्चिद् यत्नो विधीयते ॥३३॥
एतेषां दोषजातानां देशजातिविनाशिनाम् ।
वक्तारोऽपि तु निर्भीकाः पण्डितेषु सुदुर्लभाः ॥३४॥
रामावतारशर्माणो धन्यास्ते त्रिदिवंगताः ।
स च मे धन्यवादार्हो मणिशंकरपण्डितः ॥३५॥

---

ॐ उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥
ब्राह्मणो जायमानो हि पृथिव्यामधि जायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥

मनुस्मृति अ० १, ९८–९९ ।

† एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ मनुस्मृतिः

मोतीलालस्तथा विद्वान् वैदिकार्थप्रकाशकः ।
स्वामी भगवदाचार्यः शास्त्री श्रीलक्ष्मणस्तथा ॥३६॥
धर्मनाम्ना प्रचलिता दोषा यैः सम्यगीरिताः । ※
अन्ये तु पण्डिताः प्रायः सर्वे मौनावलम्बिनः ॥३७॥
सत्यं सत्यं बुधा वच्मि स्वकर्तव्यपराङ्मुखैः ।
भवद्भिर्निजदेशस्य हानिः सुमहती कृता ॥३८॥
भवन्तो धर्मरक्षायै प्रेरयन्त्यपरान् बहून् ।
परमेष निजो धर्मो भवद्भिः पाल्यते न किम् ॥३९॥
एतेषां दोषराशीनां तस्मादालस्यवर्जिताः ।
निरोधाय बुधा यूयं यतध्वमविलम्बितम् ॥४०॥ †

अथ च—

निजधर्मप्रचारार्थं विदेशेभ्यः समागतैः ।
विहिता हिन्दवोऽसंख्याः क्रिश्चियन्धर्मदीक्षिताः ॥४१॥
पर्वतेष्वपि नैकेषु निवसन्ति चिरादिह ।
मुण्डा उरांव सन्थाली प्रमुखा बहुजातयः ॥४२॥ $
तेषु शिक्षाप्रचाराय सभ्यताशिक्षणाय च ।
वैदेशिका नरा नार्यो बहवः सन्ति तत्पराः ॥४३॥
तेषामेतेन यत्नेन बहुपर्वतवासिनः ।
परित्यज्य निजं धर्मं क्रिश्चियन्धर्ममाश्रिताः ॥४४ ।

---

※ विषयेऽस्मिन् एतेषां ग्रन्था लेखाश्च अवलोकनीयाः । विदुषां परिचयस्तु परिशिष्टभागे अवलोकनीयः ।

† अस्मिन् विषये "संस्कृतपाठशालाओं में दैनिक धर्मशिक्षा की आवश्यकता और उसकी योजना" इतिनामकं कार्यालय द्वारा प्रकाशितं पुस्तकं द्रष्टव्यम् ।

$ अवलोक्यताम् 'आदिवासी' नामकं केन्द्रीयसूचनाविभागप्रकाशितं पुस्तकम् । स्थानम्—प्रकाशनविभाग, सूचनाकार्यालय, भारत सरकार दिल्ली८ म०१॥)

इदानीं भारते जाते स्वतन्त्रे तु विदेशिनः ।
पूर्वतोऽप्यधिकं सक्ता निजधर्मप्रचारणे ॥४५॥*

परन्त्वस्यामवस्थायामपि संस्कृतपण्डिताः ।
निजधर्मप्रचाराय प्रयत्नं किमु कुर्वते ॥४६॥

धन्यः स्वामी दयानन्दः स तु येन तपस्विना ।
स्थापनाऽर्यसमाजस्य कृता जातिहिताय वै ॥४७॥

आर्यैर्विदेशिनामेषां प्रचारस्याऽवरोधने ।
निजधर्मप्रचारे च प्रयत्नो विहितो महान् ॥४८॥

परन्तु पण्डितैरस्मिन् विषये किं विधीयते ।
अथवा भवतामेतत् कर्तव्यं नैव विद्यते ॥४९॥

अपरं च—

अधुना बहवोऽस्पृश्या हित्वा धर्मं पुरातनम् ।
"अम्बेडकर" नेतृत्वे जाता बुद्धानुयायिनः ॥५०॥

द्वाविंशतिमितास्तेषां प्रतिज्ञाः सर्वसम्मताः ।
जनयन्ति भियं चित्ते हिन्दुविद्वेषकारणात् ॥५१॥ †

सर्वेषां पुरतो हिन्दुमन्दिराद्देवमूर्तयः ।
निष्काश्यन्ते नवैर्बौद्धैः ब्रह्मविष्णुशिवादयः ॥५२॥

अत्र किन्नु समाधानं किं कर्तव्यं च हिन्दुभिः ।
विषयेऽस्मिन् न वै दृष्टो विदुषां कोऽपि निर्णयः ॥५३॥

वर्तमाने समाजेऽस्मिन्नस्माकं चिरकालतः ।
दोषाः समागताः सन्ति शतशोऽथ सहस्रशः ॥५४॥

---

* अवलोक्यतामेतत् पुस्तकत्रयं हिन्दुरक्षाभिलाषिभिर्विद्वद्भिश्छात्रैश्च—

१—खिस्ती धर्मप्रचाराचे शैतानी उपाय, (मराठी) (स्वाध्यायमंडल, पारडी जि॰ सूरत)

२—ईसाई मिसनरियों का कुचक्र (हिन्दू धर्म सेवासंघ, सब्जीमण्डी, देहली)

३—नियोगी रिपोर्ट (ईसाई मिश्नरीसम्बन्धे मध्यप्रदेशशासनद्वारा प्रकाशितं मिश्नरीदुर्नीतिसूचकं विस्तृतं विवरणम्)।

† अवलोक्यतां नागपुरसम्मेलनस्य विस्तृतं विवरणम् ।

नूतनाश्चापि भूयांसो देशकालविपर्ययात् ।
दुर्विचारा दुराचारा दृश्यन्ते सर्वतोऽनिशम् ॥५५॥
भक्षितो बहुभिर्नव्यैः प्राचीनैरपि कीटकैः ।
पुराणो हिन्दुवृक्षोऽयं साम्प्रतं शीर्णतां गतः ॥५६॥
बहुभिश्च विपर्यासैरिमं धर्मसमाजयोः ।
ऊर्ध्वमूलमधःशाखं जातं पश्यामि साम्प्रतम् ॥५७॥
अतस्तत्सुव्यवस्थायै पुनः संरक्षणाय च ।
विदुषामपि कर्तव्यं नूनं किञ्चिदपेक्ष्यते ॥५८॥

दृष्ट्वाऽनिशं जगति धर्मविलोपलीलां,
यो ब्राह्मणोऽपि नहि विह्वलतामुपैति ।
किं जन्मना किमथवाऽध्ययनेन किं वा,
ज्ञानेन तस्य खलु विप्रकुलाधमस्य ॥५९॥

## द्वितीयः सन्देशः

( धर्मोपदेशकेषु सात्विकताया अभावमुद्दिश्य )

इदमप्यपरं कष्टं यद् धर्मस्योपदेशकाः ।
साम्प्रतं शुद्धया वृत्या निजकार्यं न कुर्वते ॥१॥
सन्ति केचन विद्वांसो देशे धर्मोपदेशकाः ।
व्याख्यानं ददते गत्वा धार्मिकीषु सभासु ये ॥२॥
परं प्रचारो धर्मस्य तेषां लक्ष्यं न विद्यते ।
तेषां तु मुख्यमुद्देश्यं केवलं द्रविणार्जनम् ॥३॥
यावन्न तेषां द्रव्यस्य प्राप्तिर्भवति निश्चिता ।
तावत्ते नैव गच्छन्ति सभासु प्रार्थिता अपि ॥४॥
आचारतोऽपि धर्मेषु तेषां निष्ठा न विद्यते ।
बहुधर्मोपदेष्टारः सन्ध्यामपि न कुर्वते ॥५॥
सभायां बहुधाऽऽचार्योः कृत्वाऽऽचारस्य शिक्षणम् ।
अस्माभिः "स्टेशने" दृष्टाः शष्कुलीशाकभोजिनः ॥६॥

प्रायो धार्मिकलोकेषु धर्माचार्यवरेष्वपि ।
बाह्यप्रदर्शनस्यैव प्रवृत्तिरवलोक्यते ॥७॥
बाह्याऽडम्बरबाहुल्यं स्पर्शास्पर्शोग्रभावना ।
स्वार्थसिद्धिमयी दृष्टिस्त्रयमाचार्यलक्षणम् ॥८॥
एवमाचारहीनानां लुब्धानां धर्मजीविनाम् ।
उपदेशेन लोकेषु धर्मश्रद्धा कथं भवेत् ॥९॥

अपरं च

धर्मोपदेशकाः प्रायस्तादृशा एव वीक्षिताः ।
परलोकप्रधानं ये कुर्वते धर्मदेशनम् ॥१०॥
अहिंसा-त्याग-वैराग्य-मुक्तीनामेव शिक्षणम् ।
मन्यन्ते ते महाधर्मं शिक्षयन्ति तदेव च ॥११॥
सांसारिकं सुखं सर्वं भुञ्जाना अपि ते स्वयम् ।
परेभ्योऽसारतां वाचा संसारस्य प्रचक्षते ॥१२॥
इह लोके मनुष्याणां कथमभ्युदयो भवेत् ।
एतस्मिन् विषये प्रायेणासते मौनमेव ते ॥१३॥
दम्भ-पाखण्डरहितः शुद्धधर्मोपदेशकः ।
जनताया हितैषी च धर्माचार्यः सुदुर्लभः ॥१४॥

अथ च—

अयमप्यपरो दोषो दृष्टो धर्मोपदेष्टृषु ।
यच्छूद्रान्त्यजादीनां संग्रहं नैव कुर्वते ॥१५॥
प्रायो धार्मिकसंस्थाभिर्धर्माचार्यवरैस्तथा ।
शूद्राणामन्त्यजानाञ्च सदोपेक्षा विधीयते ॥१६॥
केवलं ते द्विजातीनां धनिनां श्रेष्ठिनां तथा ।
तथा साधुमहान्तानां दृश्यन्ते पक्षपातिनः ॥१७॥
व्याख्यानेषु तु ते शूद्रान् घोषयन्त्यात्मनोऽनुजान् ।
परन्त्वनुज-सौहार्दं दर्शयन्ति न ते कृतौ ॥१८॥
अतो धर्मप्रचारादौ धार्मिकीषु सभासु वा ।
शूद्राणामन्त्यजानां च सहयोगो न दृश्यते ॥१९॥

अस्मादेव च विच्छेदात् वैमनस्यात्तथैव च ।
प्रायो धर्मसभाः सर्वाः समजायन्त पङ्गवः ॥२०॥
अतो धर्मसभोन्नत्यै शूद्रोन्नत्यै तथैव च ।
उभयोः स्नेहसम्बन्धः सविशेषमपेक्ष्यते ॥२१॥
अथ जातिच्युता ये च येचाऽन्यधर्मदीक्षिताः ।
तेषामुद्धारसम्बन्धे इमे किञ्चद् वदन्ति नो ॥२२॥
आसीदेकस्तदा कालो यदा कैश्चिन्मनीषिभिः ।
मलकानादिशुद्ध्यर्थं प्रयत्नो विहितो महान् ॥२३॥*
परं तैरपि तत्पश्चाद् आलस्येन भयेन वा ।
स सिद्धान्तः स यत्नश्च सर्वथैव विसर्जितः ॥२४॥
तदारभ्याऽधुना यावत् धर्माचार्येषु कोऽपि नो ।
तदर्थं चिन्तयति वा यतते वा मनागपि ॥२५॥
तस्मादद्यापि भूयांसो हिन्दवोऽथ द्विजा अपि ।
वर्तन्ते हन्त खृष्टेषु यवनेषु च सङ्गताः ॥२६॥
कथन्नु धार्मिका एते विषयेऽस्मिन्नुदासते ।
इति मे महदाश्चर्यं महती वेदना च मे ॥२७॥
धर्माचार्याभिधैरेतैर्धर्मव्यापारिभिस्ततः ।
वस्तुतो धर्मरक्षायाः काचिदाशा न विद्यते ॥२८॥
विदुषां पुरतो मूर्खा आचार्या लिङ्गधारिणः ।
धर्माधर्मादिसम्बन्धे स्वपाण्डित्यं वितन्वते ॥२९॥
एतादृश्यां स्थितौ सर्वैर्बुधैः राष्ट्रहितैषिभिः ।
भारो धर्मप्रचारस्य हस्ते ग्राह्यो निजे द्रुतम् ॥३०॥
देशकालानुवर्तिन्या दृष्ट्या व्यापिकयाऽधुना ।
बुद्ध्वा वास्तविकं धर्मं तत्प्रचारो विधीयताम् ॥३१ ।
स्वस्वानां पाठशालानां प्रदेशे पार्श्ववर्तिनि ।
गुरुशिष्यैर्यथाशक्यं कार्यं धर्मप्रचारणम् ॥३२॥

---

* अवलोक्यतां मलकानाशुद्धिसम्बन्धे वाराणसेय-भारतधर्ममहामण्डलात् प्रकाशितो निबन्धः पण्डितानां शुद्धिसमर्थन सिद्धान्तश्च ।

कल्पयन्तु च विद्वांसः सर्वे विद्यालयं निजम् ।
धर्मस्य संस्कृतेश्चापि जीवनस्थानमुत्तमम् ॥३३॥
भाले धर्मोपदेष्टॄणां लग्नं यल्लाञ्छनं परम् ।
शुद्धधर्मप्रचारेण प्रक्षाल्यं तन्मनीषिभिः ॥३४॥

धर्मोपदेशकपदे विनिवेशितोऽपि
तद्रूप साधनयुतोऽपि सुपूजितोऽपि ।
यः कोऽपि हन्त कुरुते प्रतिकूलकार्यं
कोऽन्यस्ततो ननु नृशंसतरो नरः स्यात् ॥३५॥

## तृतीयः सन्देशः

( राष्ट्रीयेषु सामाजिकेषु च कार्येषु कर्तृत्वनेतृत्वयोरभावमुद्दिश्य )

अथ राष्ट्रीयकार्येषु तथा सामाजिकेषु च ।
भवतां यन्न नेतृत्वं कर्तृत्वं वापि दृश्यते ॥१॥
अयमप्यपरो हेतुः क्लेशे मम महत्तरः ।
भवताञ्चाप्यसम्माने संस्कृतस्यापि च क्षये ॥२॥
विद्वांसोऽन्यान्यभाषाणामेव देशे समन्ततः ।
दृश्यन्ते लोकनेतारो लोकसेवापरास्तथा ॥३॥
परन्तु सुबहोः कालादालस्यादिसमन्वितैः ।
भवद्भिस्त्वदिदं स्वीयं पदं त्यक्तं सनातनम् ॥४॥
न राज्ये न प्रजावर्गे न स्वतन्त्रदलेषु वा ।
अपि पण्डितवर्याणां नेतृत्वं श्रूयते क्वचित् ॥५॥
नेतृत्वं वाक्पटुतया क्रियापटुतया तथा ।
उभाभ्यामेव हेतुभ्यामवाप्तुं शक्यते जनैः ॥६॥
परं सम्प्रति दुर्दैवात् सुमहत्स्वपि शास्त्रिषु ।
क्रियायां वक्तृतायां वा पटुत्वं नोपलभ्यते ॥७॥
प्रायो वाक्पाटवाभावात् भाषाशुद्धिभयात्तथा ।
सभा-सम्मेलनादिभ्यो दूरे तिष्ठन्ति पण्डिताः ॥८॥

एवं संस्थासभादीनां प्रबन्धकरणेऽपि ते ।
साधने वाऽन्यकार्याणां न दृष्टाः कुशलाः क्वचित् ॥९॥
तीर्थादौ बहुसम्मर्दे रोगे संक्रामके तथा ।
जलप्लावन-दुर्भिक्ष-प्रमुखे लोकसङ्कटे ॥१०॥
एतादृशेषु कालेषु सेवाकर्मणि दुःखिनाम् ।
पण्डिताः प्रायशो दृष्टास्तटस्था एव सर्वदा ॥११॥
इयं पण्डितलोकानां समाजनिरपेक्षता ।
जातं तेषामुपेक्षायां समाजे कारणं परम् ॥१२॥

यतो हि—

हिताय ये तु लोकानां सहन्ते महदापदः ।
ते महापुरुषा लोके पूज्यन्ते देवता इव ॥१३॥
निजानामेव पश्यन्तु पूर्वजानामहो बुधाः ।
आदर्शं लोकसेवाया येन ते पूज्यतां गताः ॥१४॥

तथा हि—

रोगग्रस्तान् जनान् दृष्ट्वा चिन्तामग्ना महर्षयः ।
अहो कीदृशमुद्योगं चक्रू रोगोपशान्तये ॥१५॥*
राजानं वेनमालोक्य लोकानां त्रासकारकम् ।
ऋषयः संहता भूत्वा जघ्नुस्तं लोकहेतवे ॥१६॥†
स्त्री-शूद्र-द्विजबन्धूनामज्ञानध्वान्तनष्टये ।
व्यासो भारतमाख्यानं पुराणानि च निर्ममौ ॥१७॥
महर्षिर्नारदो नृणां दुःखं दृष्ट्वाऽतिविह्वलः ।
तन्नाशकारणं प्रष्टुं जगाम हरिसन्निधौ ॥१८॥
महामना दधीचिस्तु परेषां हितकाम्यया ।
प्रसन्नमनसा स्वीयान्यस्थीन्यपि समर्पयत् ॥१९॥
एवं महर्षयोऽनेके मुनयश्चाभवन् पुरा ।
प्राणान् दत्वाऽपि लोकानां निरता हितसाधने ॥२०॥

---

* अवलोक्यन्तां चरकसुश्रुतादिग्रन्थानां प्रारम्भिका अध्यायाः ।
† श्रीमद्भागवतस्य चतुर्थे स्कन्धे चतुर्दशोऽध्यायो द्रष्टव्यः ।

परं सम्प्रति विद्वद्भिस्तेषामेव कुलोद्भवैः ।
सुखसाध्येऽपि लोकानां कार्ये दृष्टिर्न दीयते ॥२१॥
दृष्टिदानस्य का वार्ता कीदृशी नु दशाऽधुना ।
समाजस्येति चिन्ताऽपि प्रायो विद्वत्सु नेक्षिता ॥२२॥

तथाहि—

कियन्तो निर्धना लोके कियन्तो दुःखितास्तथा ।
दीना हीना अनाथाश्च कियन्तो बत मानवाः ॥२३॥
कियन्तः शोषिता लुब्धैः कियन्तो लुण्ठिताः शठैः ।
पीड्यन्ते कति वा क्रूरैर्दुर्बला बलवच्चरैः ॥२४॥
कियन्तो नु गृहैर्हीनाः कियन्तो वसनैस्तथा ।
कियतामथ लोकानां लभ्या शुष्काऽपि रोटिका ॥२५॥
कति वा बालका वृद्धा आकर्षन्तः परस्परम् ।
भुक्त्वा त्यक्तानि पत्राणि लिहन्ति शुनका यथा ॥२६॥
अनाथा कति वा मर्त्या मलमूत्रसमन्विताः ।
म्रियमाणा मृताश्चापि शेरते हन्त वर्त्मसु ॥२७॥*
कियन्तः कठिनं कृत्वा श्रमं सायं समागताः ।
यापयन्ति जलं पीत्वा उपवासेन यामिनीम् ॥२८॥
एकामुपर्यधः कृत्वा शाटीं शीते भयानके ।
शिशुभिः सह सीदन्ति कियत्यो बत योषितः ॥२९॥
कुलीनाः कति वा कन्या द्रव्याभाववशात् पितुः ।
नयन्ति निजतारुण्यं गृह एवाऽविवाहिताः ॥३०॥
कियत्यो विधवा नार्यः कुटुम्बिभिरुपेक्षिताः ।
गमयन्ति दिनं स्वीयं भिक्षया व्यसनेन वा ॥३१॥
भग्नपृष्ठकटिग्रीवा जरठा गलितत्वचः ।
वसाना वसनं शीर्णं क्षुधा पृष्ठगतोदराः ॥३२॥—

* यथा प्रायशः सर्वेषु धार्मिकक्षेत्रेषु दृश्यते । वाराणस्यां च यथा दशाश्वमेधघट्टे ।

गृहीत्वा लकुटीमेकामुच्छ्वसन्त्यः पदे पदे ।
"बाबू भैयेति" शतशो रटन्त्यः कातरा गिरः ॥३३॥—
रोटिकाखण्डमात्रार्थं वीथीविथीषु विह्वलाः ।
याचन्ते कति वाऽस्माकं संम्मान्या वृद्धमातरः ॥३४॥
देशेऽस्मिन् सर्वतः श्रेष्ठा मताः शास्त्रेषु मातरः ।
परन्तु कीदृशी तासां दयनीया दशाऽधुना ॥३५॥
कियन्तः साधनाभावात् कुटुम्बभरणेऽक्षमाः ।
मनुजा अत्यजन् प्राणान् स्वयमेवात्महत्यया ॥३६॥
चिन्तनीयमिदं सर्वं समस्तैः स्वाभिमानिभिः ।
देशभक्तैस्तथा किञ्चित् प्रतिकर्तव्यमेव च ॥३७॥
दृष्ट्वाऽपि बहुलोकानामसह्या दुर्दशा इमाः ।
निश्चिन्तो निष्क्रियस्तिष्ठेत् कथं हृदयवान् जनः ॥३८॥
श्रीरामकृष्णयोर्देशे धर्मक्षेत्रे नु भारते ।
दयनीया दशा सेयं लोकानां किमु शोभते ॥३९॥
परं पण्डितलोकानामेतस्मिन् पुण्यकर्मणि ।
श्रूयते दृश्यते वापि न चर्चा न प्रतिक्रिया ॥४०॥

अथ च—

राजनीतिकदृष्ट्यापि देशस्य तु दशाऽधुना ।
वर्तते न समीचीना न स्थिरा नापि शान्तिदा ॥४१॥
संस्था बहुविधास्तासां भिन्ना भिन्नाश्च नीतयः ।
विजयाय मिथस्तासां सङ्घर्षो न्यायवर्जितः ॥४२॥
बाह्याऽभ्यन्तरशत्रूणां काले काले ह्युपद्रवाः ।
वैमनस्यं तथा किञ्चिद् दक्षिणोत्तरभागयोः ॥४३॥
नेफालद्दाखयोश्चीन-पाकिस्तानादि-दुष्टताः ।
झारखण्डे तथा नागाप्रदेशे चापि दुःस्थितिः ॥४४॥
एवं नानाप्रदेशेषु नानास्थानेषु चाऽधुना ।
दृश्यन्ते घटना नाना देशे देशविघातिकाः ॥४५॥

एवमार्थिकदृष्ट्यापि न देशस्य दशा शुभा ।
अप्यावश्यकवस्तूनामभावैः पीडिता जनाः ॥४६॥
जनसंख्या तु देशेऽस्मिन् वृद्धिं याति दिने दिने ।
परन्तूत्पादनं तादृक् वर्द्धमानं न दृश्यते ॥४७॥
अत एव विदेशेभ्यो भूयो भूयोऽन्नयाचनात् ।
ऋणादानाच्च निर्वाहः कथञ्चिदिह जायते ॥४८॥
अथ किं खलु वक्तव्यं शिक्षाया विषये यदा ।
विश्वविद्यालया जाताः हन्त सङ्घर्षभूमयः ॥४९॥
एवं क्षेत्रेषु सर्वेषु दृश्यते दुर्व्यवस्थितिः ।
यस्या निवारणं सर्वैः कर्तव्यं देशवासिभिः ॥५०॥
अतएव तु भूयांसः पुरुषाः सन्ति तत्पराः ।
संस्थाश्च राष्ट्रनिर्माणे स्वस्वोद्देश्यानुसारतः ॥५१॥
समाजे राजनीतौ च शिक्षायां संस्कृतौ तथा ।
उत्थानार्थं स्वदेशस्य सर्वैर्यत्नो विधीयते ॥५२॥
एतस्मिन् राष्ट्रसेवाया विशिष्टेऽवसरेऽधुना ।
शुभे समाजोत्थानस्य मुहूर्ते च समागते ॥५३॥—
संस्कृतज्ञसमाजेन विपुलेनापि न कृतम् ।
कार्यं किञ्चित् समुल्लेख्यमिति मे महती व्यथा ॥५४॥
अत एव च निन्द्यन्ते प्रायः सर्वत्र पण्डिताः ।
तेषामेव च दोषेण जाताऽहमपि निन्दिता ॥५५॥
विषये यत्र युक्ताऽसीद् बुधानामग्रगामिता । ❀
पृष्ठगामित्वमपि नो तत्र तेषां विलोक्यते ॥५६॥
राष्ट्रोत्थानस्येतिहासे पण्डितानां भविष्यति ।
स्थानं किमिति शोचन्ती निमज्जामि मुहुर्मुहुः ॥५७॥
अनया च समाजस्योपेक्षया पण्डिता अपि ।
उपेक्षिताः समाजेन नेतृत्वं च ततो गतम् ॥५८॥

❀ १—ब्राह्मणो वै प्रजानामुपद्रष्टा । काठकसंहिता, १, १६ ।
२—ब्राह्मणः सर्वभूतानां योगक्षेमसमर्पिता । म० भा० अनु० २६, ६ ।

नेतृवंशं समुत्पन्ना विख्यातेऽसंख्यवत्सरैः।
भवन्तो निजदोषेण नीयन्तेऽन्यैरहोऽधुना ॥५९॥
शिक्षादोषात्तथाऽलस्यात् तपस्त्यागाद्यभावतः।
क्षुद्रस्वार्थैकलक्ष्यत्वाद् भवन्तो नेयतां गताः ॥६०॥
कृत्वा भाले बृहट्टीकां बद्ध्वा च महतीं शिखाम्।
भवन्तो हन्त मन्यन्ते आत्मानं ब्राह्मणोत्तमम् ॥६१॥
परं नैतावता युष्मद्-ब्राह्मण्यं सिद्ध्यति क्वचित्।
ब्राह्मणत्वं तु लब्धं स्यात् त्यागेन तपसा तथा ॥६२॥
अतो राष्ट्रीयकार्येषु तथा सामाजिकेष्वपि।
नूनमेव यथाशक्यं ध्यानं ददत पण्डिताः ॥६३॥
पृथक् संघं विनिर्माय सङ्गता वाऽपरैः सह।
भवन्तोऽपि प्रवर्तन्तां लोककल्याणकर्मणि ॥६४॥

तथा हि—

समूहे द्विजबन्धूनां स्त्रीशूद्राणां तथैव च।
श्रीमद्भागवतादीनां पुराणानां प्रवाचनम् ॥६५॥
उद्धारोऽस्पृश्यजातीनाम् अनाथानां सहायता।
अन्यायानां प्रतीकारो वचसा कर्मणापि च ॥६६॥
अधर्म्यचलचित्राणां मद्यपानादिकर्मणाम्।
भ्रष्टाचारादिकानां च विरोधः कर्मणा गिरा ॥६७॥
ग्रामे ग्रामे सभाः कृत्वा कथयित्वा कथाः शुभाः।
जनेभ्यः खलु मूढेभ्यः सन्मार्गस्य प्रदर्शनम् ॥६८॥
एवमादीनि कार्याणि यथाकालं यथाबलम्।
अवश्यमेव विद्वद्भिरनुष्ठेयानि निष्ठया ॥६९॥
इह यद्यपि वर्तन्ते देशे स्थानेषु केषुचित्।
जीवन्त्यो म्रियमाणाश्च पण्डितानां सभा अपि ॥७०॥
परं सामाजिके कार्ये राष्ट्रीये वापि कर्मणि।
नवासु वा समस्यासु तासां ध्यानं न गच्छति ॥७१॥

अथ चेत् कायतः कार्यं कर्तुं कालो न लभ्यते ।
विचारोऽपि कथं योग्यः समाजाय न दीयते ॥७२॥
शास्त्रोक्तो ज्ञानदानस्य धर्मदानस्य चाऽधुना ।
अपूर्वो महिमा कस्माद् भवद्भिः खलु विस्मृतः ॥७३॥
विचारदानतो वापि श्रमात् प्रेरणयापि वा ।
किञ्चित् सामाजिकं कार्यं नूनं सर्वैर्विधीयताम् ॥७४॥

कालेऽस्मिन् निजदेशजातिविषये कर्णे निधायाङ्गुली—
नेत्रे चापि निमील्य वाचि निपुणं दत्त्वा दृढामर्गलाम् ।
श्रीमन्तो यदि शेरते सुखमये शय्यातले पण्डिताः
स्वं देशं प्रति भो भवेदयमहो विश्वासघातो महान् ॥७५॥*

## चतुर्थः सन्देशः

( भारतीयगौरवस्य ज्ञाने प्रचारे वा कर्तव्यबुद्धेरभावमुद्दिश्य )

इदञ्चापि ममाऽसह्यं विद्वांसो यन्न तत्पराः ।
भारतीयमहत्ताया ज्ञाने वापि प्रचारणे ॥१॥
इयं संस्कृतभाषा तत्साहित्यं चाऽथ संस्कृतिः ।
एतत्त्रयं मतं सर्वैर्भारतीयं धनं परम् ॥२॥
लोके केवलमेतेषां त्रयाणामेव कारणात् ।
भारतीयं यशः शुभ्रं दिशामन्तमुपागतम् ॥३॥
वैज्ञानिकत्वं भाषायाः, साहित्यस्य विशालता ।
उदात्तता संस्कृतेश्च भारतीया विशेषताः ॥४॥
परन्तु परतन्त्रत्वाद्देशस्य मनसस्तथा ।
भारतस्य महत्ता सा स्वकीया विस्मृता शनैः ॥५॥

---

* यथोक्तं धर्मशास्त्रकारैः—
ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते ।
इह कृच्छ्राय तपसे प्रेत्यानन्तसुखाय च ॥
ब्राह्मणस्य तु देहोऽयं न सुखाय कदाचन ।
तपः क्लेशाय धर्माय प्रेत्य मोक्षाय सर्वदा ॥' बृहद्धर्मपुराण २।४४ ।

देशस्योन्नतये नूनं हृदये देशवासिनाम् ।
स्वदेशविषयेऽपूर्वा श्रद्धा काचिदपेक्ष्यते ॥६॥
सैव श्रद्धा पुराऽस्माकं नाशं नीता विदेशिभिः ।
स्वसाम्राज्यप्रसाराय स्वबलस्थापनाय च ॥७॥ *
तेषामनुकृतिं कृत्वा देशस्थैरपि बन्धुभिः ।
बहुभिर्निजवस्तूनां निन्दा सुमहती कृता ॥८॥
अतो भारतसम्बन्धेऽश्रद्धा यूनामजायत ।
भारतीया जना एव रता भारतगर्हणे ॥९॥
तस्मादाङ्गललोकानां भाषायाः संस्कृतेस्तथा ।
प्रचारो भारते जातो गेहे गेहे जने जने ॥१०॥
इदानीं तु पुनर्लब्धे स्वातन्त्र्ये, देशवासिनाम् ।
आकृष्टा वर्तते दृष्टिः प्राचीनं गौरवं प्रति ॥११॥
यदि भारतमाहात्म्यं वास्तवं लोकसंसदि ।
पुनः पुनः प्रकाश्येत बोध्येरंश्चाखिला जनाः ॥१२॥—
तदा शिक्षितलोकानामास्था पाश्चात्यशिक्षया ।
विनष्टाऽपि पुनर्नूनं प्ररोहेत शनैः शनैः ॥१३॥
अस्मिन् काले तु विदुषामेकैवास्त्युचिता क्रिया ।
भारतीयमहत्त्वस्य पुनर्देशे प्रचारणम् ॥१४॥†

---

* यथा लार्ड मेकाले ( Lord Macaulay ), मिस मेयो ( Miss Mayo ), सेनार्ट ( Senart ), ग्रेव्हस् ( Graves ), ( Frank Thilly ) फ्रैन्क थिली, मि० विलियम आर्चर ( MR. William Archer ) प्रभृतिभिर्विदेशवासिभिः ।

† यथा—
W. Hopkain महोदयः—"Ethice in India" इति नामके ग्रन्थे "What India needs is to realise itself"
Evolution of Hindu Moral ideals"

श्री स्वामि विवेकानन्द महोदयस्तु इतोऽप्यधिकं विदेशेष्वपि आध्यात्मिकतायाः प्रचारार्थं विजययात्रायै च भारतीयान् विदुषः समुद्बोधयति । यथा—
(अग्रेऽपि)

परं पण्डितलोकानां हा कष्टं कथयामि किम् ।
भारतीयमहत्तायाः सम्यग् ज्ञानं न विद्यते ॥१५॥
उचिता संस्कृतज्ञानां यत्रासीत् पारगामिता ।
तत्र प्राथमिकं ज्ञानं बहूनां नोपलभ्यते ॥१६॥
न भाषाविषये तस्मान्न साहित्ये न संस्कृतौ ।
महत्त्ववर्णनं कर्तुं शक्ताः प्रायेण पण्डिताः ॥१७॥
अनेन कारणेनैव भारतीयैरुपेक्षिता ।
इदानीमपि भूयोभिर्विषीदामि दिवानिशम् ॥१८॥
परं पण्डितलोकानां ध्यानमत्र न गच्छति ।
ज्ञानव्याख्यानसामर्थ्यं लब्धुं नो तैः प्रयत्यते ॥१९॥
परं प्रमाणैर्दृष्टान्तैस्तथा तुलनयाऽपरैः ।
गिरा प्रभावशालिन्या शैल्याऽकर्षिकया तथा ॥२०॥—
उक्तस्य त्रितयस्यापि महत्त्वं यदि कीर्तितुम् ।
क्षमाः स्युः पण्डिताः सर्वे तन्मे प्रीतिकरं भवेत् ॥२१॥

अथ च—

भूयांसः संस्कृताचार्या आंग्लविद्यालयेष्वपि ।
अध्यापयन्ति पर्याप्तं समयं प्राप्नुवन्ति च ॥२२॥
तत्र ते यदि तत्रत्यान् स्वशिष्यान् शिक्षकांस्तथा ।
सम्यग् महत्त्वमेतेषां बोधयेयुर्निरन्तरम् ॥२३॥—
शङ्कानां च तदीयानां दद्युस्तोषदमुत्तरम् ।
तदा भूयान् प्रचारः स्यान्मम शिक्षितमण्डले ॥२४॥

---

"Once more the world must be conquered by India this is the dream of my life. We must go out, we must conquer the world through our spirituality. and philosophy. There is no ulternative. We must do or die."

India's cultural Empire and Her future.

परं तेष्वपि विद्वत्सु चाकचिक्यपरेष्वहो।
एतादृशाः शुभा भावा उदयन्ति न जातुचित् ॥२५॥
परं भारतराष्ट्रस्य सेवाकाले समागते।
पण्डितानामिदं मौनं न कथञ्चन शोभते ॥२६॥
अतः सर्वे बुधा ज्ञानं लब्ध्वाऽभ्यस्य च वक्तृताम्।
भारतीयमहत्ताया गानं कुर्वन्तु सर्वशः ॥२७॥
भारतीयमहत्ताया विषये बहुभिर्बुधैः।
लिखिता बहवो ग्रन्था देश्यैर्वैदेशिकैस्तथा ॥२८॥*
विधाय तेषां सर्वेषां संग्रहञ्चानुशीलनम्।
बुधा भवत सन्नद्धा विलम्बो नाऽधुनोचितः ॥२९॥
विषयत्रयसम्बन्धे एकहोरावसायिनी।
एकैका वक्तृता रम्याऽभ्यस्याऽवश्यं मनीषिभिः ॥३०॥
एकां सप्तदीनीं दत्त्वा पक्षं वा मासमेव वा।
अभ्यस्या वक्तृतैका तु सर्वचेतोविमोहिनी ॥३१॥
ये विद्वांसो दुरूहाणां ग्रन्थानां पाठने क्षमाः।
तेषां कृते किमेकं भो भाषणं नन्वसम्भवम् ॥३२॥

---

* यथा—

१—श्री लोकमान्य तिलक, स्वामी विवेकानन्द, स्वामी रामतीर्थ, कवीन्द्र रवीन्द्र, योगिराज अरविन्द, डा० एस्० राधाकृष्णन्, स्वामी दयानन्द, महामना मालवीय, डा० भगवान दास, प्रभृतिभिर्लिखिताः ग्रन्थाः।

२—वैदेशिकैर्लिखितानां ग्रन्थानां परिज्ञानाय शास्त्रधर्मप्रचार सभा, चौरंगी, कलकत्ता द्वारा प्रकाशितं Hindu glory नामकं पुस्तकं द्रष्टव्यम्।

३—एतादृशग्रन्थानां लघ्वी सूची परिशिष्टभागे अवलोकनीया।

४—संस्कृतभाषायाः संस्कृतसाहित्यस्य च महत्त्वविषये विविधाः संस्कृत साहित्येतिहाससम्बन्धिनो ग्रन्थास्तथा कार्यालयद्वारा प्रकाश्यमानः संस्कृत-भाषणानां तथा संस्कृतसम्बन्धिनां लेखानां संग्रहश्च अवलोकनीयः।

५—भाषणोपयोगिनां विविधविषयाणां परिज्ञानाय तथा भाषणस्य अभ्यासाय च सार्वभौमसंस्कृतप्रचारकार्यालयतः साहाय्यं लब्धुं शक्यते। अभि-लाषिभिः एतदर्थं पत्रव्यवहारः साक्षात्कारश्च कर्तव्यः।

पण्डिता भाषणं दातुं न क्षमा इति लाञ्छनम् ।
शीघ्रात् शीघ्रतरं यूयं नाशयध्वं विपश्चितः ॥३३॥
मासस्याऽभ्यन्तरे कृत्वाऽभ्यासं सम्यक् प्रभाषितुम् ।
निजयोग्यतया कार्या लोका विस्मितमानसाः ॥३४॥
जनतन्त्रयुगे चास्मिन् सम्यग् भाषणकौशलम् ।
स्वप्रभावप्रसाराय परमावश्यकं बुधाः ॥३५॥
इदमेकमपि प्रौढं वैशिष्ट्यं विबुधेषु चेत् ।
तेन स्वान्तःसुखं गर्वो यशश्चापि भवेत् खलु ॥३६॥
एतावदपि यः कार्यं कर्तुं नो पारयेद् बुधः ।
मुखं तस्य न वाञ्छामि कदाचिदपि वीक्षितुम् ॥३७॥

अद्यापि पण्डितवराः समयोऽस्ति शेषः
शैथिल्यदोषमपनीय भवन्तु सज्जाः ।
आपूरयन्तु च दिशो दश देवभाषा—
साहित्यसंस्कृतिगुरुत्वगिरां निनादैः ॥३८॥

# विचार-व्यवहार-विषयकम्

## पञ्चमं प्रकरणम्

### प्रथमः सन्देशः

( पण्डितेषु परस्परं सौहार्दसङ्घटनादीनामभावमुद्दिश्य )

इयञ्चापि न युष्माकं प्रवृत्तिर्मेऽल्पदुःखदा ।
सौहार्दं साहचर्यं वा यन्मिथो नैव रक्षथ ॥१॥
एकस्मिन् नगरेऽनेके निवसन्ति सुपण्डिताः ।
परं तेषु न पश्यामि स्नेहं वा सहगामिताम् ॥२॥
भूतिरेतस्य नायाति विजया तस्य दुर्गमा ।
असौ तु सर्वथाऽशक्तः कौमुद्या अपि पाठने ॥३॥
एवं परस्पराक्षेप—निन्दानिक्षिप्तचेतसः ।
पण्डिता अपरं नैव मन्यन्ते पण्डितं स्वतः ॥४॥
गुर्जरोऽयमयं गौड़ः शाकद्वीपीय एष रे ।
अयं तु सरयूपारी सारस्वतसुधीरसौ ॥५॥
इत्येवं चिन्तयन्तो वै विद्वांसो निखिला अपि ।
ईर्ष्याद्वेषादिसंयुक्ता न प्रीतिं कुर्वते मिथः ॥६॥
पण्डिताः पण्डितानां तु लाभं दृष्ट्वा तथोदयम् ।
ज्वलन्ति मनसाऽत्यन्तं द्रुह्यन्ति च निरन्तरम् ॥७॥
एकश्चेत् पण्डितः कश्चिल्लभते पदमुत्तमम् ।
तदा तत्पातनायाऽन्ये प्रयत्नं बहु कुर्वते ॥८॥
"अहं महानहं योग्यः सर्वेषामुत्तमोऽस्म्यहम् ।
तत् किमर्थं नु गच्छेयं लघुपण्डितसन्निधौ" ॥९॥
"यद्यप्यस्मि लघुः सत्यं तथापि यदि गम्यते ।
मया समीपे महतां लाघवं मेऽधिकं भवेत्" ॥१०॥

अनया हीनया बुद्धया महान्तो लघवोऽपि वा ।
पण्डिता यान्ति न प्रायोऽपरपण्डितसन्निधौ ॥११॥
परीक्षावऽसरे केन्द्रे बहवो यान्ति पण्डिताः ।
मिलन्ति नहि ते स्नेहात् किन्त्वेकत्र स्थिताः अपि ॥१२॥
धृत्वा तु तत्र ते मौनम् उपविष्टाः पृथक्-पृथक् ।
दृष्टयाऽऽशङ्कितया शश्वन्निरीक्षन्ते परस्परम् ॥१३॥
महता चेत् प्रयत्नेन सभा तत्र विधीयते ।
आनीयन्ते हठादेते धृत्वा धृत्वा तु पण्डिताः ॥१४॥
"सङ्गच्छध्वं संवदध्वं" "सङ्घे शक्तिः कलौ युगे" ।
"शुष्कवैरं विवादं च न कुर्यात् केनचित् सह" ॥१५॥
श्रुतिस्मृतिपुराणानां वचांस्येतानि पण्डिताः ।
यथा भवद्भिर्लङ्घ्यन्ते न तथाऽन्येन केनचित् ॥१६॥
अत एव भवन्तो वै सङ्घशक्तेरभावतः ।
सहन्ते शक्तिमन्तोऽपि दुर्दशां परमामिह ॥१७॥
न समाजे न राज्ये वा भवतां यदिहादरः ।
यश्चायमार्थिकः क्लेशो मम वापि परिक्षयः ॥१८॥
या इमा अवलोक्यन्ते दुर्दशा आवयोरिह ।
भवत्सङ्घटनाभावः कारणं तत्र केवलम् ॥१९॥ ❀
अतो दुर्भावनां हित्वा सङ्घशक्तिर्विधीयताम् ।
सभाश्च संस्कृतज्ञानां स्थापनीयाः पुरे पुरे ॥२०॥
दुर्गापाठं पठित्वापि भवद्भिर्जीवनावधि ।
सङ्घशक्तेः प्रभावस्य लब्धः परिचयो नहि ॥२१॥

---

❀ तावत्संस्कृतभारतीसमुदयस्याशा दुराशा ध्रुवं
तावत्संस्कृतवेदिनामपि पुनर्भाग्योदयो दुर्लभः ॥
ईर्ष्या-द्वेष-विरोध-निन्दनपरां वृत्तिं विहायाऽखिलां ।
प्रीतिः संस्कृतपण्डितेषु न पुनर्यावत् समुज्जृम्भते ॥

( लेखकस्य )

अरे सङ्घटनं कृत्वा भवद्भिर्बलवत्तरम् ।
सङ्घशक्तिमयी दुर्गादेवी निर्मीयतां नवा ॥२२॥
तस्याधीनानि राज्यानि तस्याधीना महाजनाः ।
तस्याधीनाश्च नेतारो यस्य सङ्घटनं दृढम् ॥२३॥
तस्माद्दुर्भावनां हित्वा मिलन्तश्च मिथो मुदा ।
दृढं सङ्घटनं स्वस्वस्थाने कुर्वन्तु पण्डिताः ॥२४॥

दृष्ट्वाऽपि हन्त बहु सङ्घटनानि लोके
तेषां बलं तदनुकूलफलं च नित्यम् ।
अद्यापि सङ्घरहिता विबुधा भवन्तो
दुःखं सहन्त इति मे विपुलो विषादः ॥२५॥

## द्वितीयः सन्देशः

( शास्त्रार्थसमये विद्वत्सु शान्तिसौजन्ययोरभावमुद्दिश्य )

अनेनापि च दोषेण क्षोभो मे जायते महान् ।
शास्त्रार्थेषु भवन्तो यत् सौजन्यं दर्शयन्ति नो ॥१॥
शास्त्रार्थे समवेतेषु पण्डितेषु महत्स्वपि ।
दृश्यते व्यवहारो नो मिथो भद्रजनोचितः ॥२॥
न ते मिलन्ति सौहार्दात् स्निग्धं पश्यन्ति नो मिथः ।
आलपन्ति न वा प्रीत्या कुपिता इव योषितः ॥३॥
त्यक्त्वा सन्धायसम्भाषाशैलीमानन्ददायिनीम् ।
प्रायो विगृह्यसम्भाषा बुधैः सर्वैः विधीयते ॥ *
शास्त्रार्थसमयस्यादौ दूरे दूरे स्थिता अपि ।
शनैः शनैः प्रसर्पन्तो योद्धुकामा इवासते ॥४॥
धैर्यं शान्तिं परित्यज्य दूरे निक्षिप्य सभ्यताम् ।
विस्मृत्य विषयं मुख्यं कलहं कुर्वते बुधाः ॥५॥

---

* अवलोक्यतां चरकसंहितायां विमानस्थानस्याष्टमेऽध्याये सन्धायसम्भाषायां विगृह्यसम्भाषायाश्च लक्षणं तथा तयोर्जायमाना हानिर्लाभश्च ।

प्रायः शास्त्रीयचर्चासु प्रवीणैरपि पण्डितैः ।
पण्डितत्वं परित्यज्य क्षत्रियत्वं प्रदर्श्यते ॥६॥*
द्वित्राण्येव च सूत्राणि सुपरिष्कृत्य यत्नतः ।
केचित् शास्त्रार्थकण्डूतिं शमयन्ति वितण्डया ॥७॥
केचिद्दर्शयितुं स्वीयां शास्त्रार्थेषु विभीषिकाम् ।
ख्यापयन्ति निजं नाम "प्रतिवादिभयंकरम्" ॥८॥
ततश्चापरपक्षीया विद्वांसः कौतुकान्विताः ।
कृत्वा तत्र बहुव्रीहिं तस्य हास्यं वितन्वते ॥९॥
कासुचित्तु समज्यासु शास्त्रार्थसमये मया ।
पण्डितानामहो दृष्टं युद्धकाण्ड भयङ्करम् ॥१०॥
अनेन हेतुना लोके प्रवादोऽयं समन्ततः ।
कुक्कुरा इव युद्ध्यन्ति पण्डिता इत्यजायत ॥११॥
यस्मिन् तु खलु शास्त्रार्थे न जयो न पराजयः ।
न यशो नापि वित्ताशा न च कापि पुरस्क्रिया ॥१२॥
तत्र केन तु लोभेन त्यक्त्वा सद्भावनां मिथः ।
भवन्तः खलु युध्यन्ति यान्ति चैवोपहास्यताम् ॥१३॥
आसीदेकः पुराकालो यदा लाभाशया बुधैः ।
विजिगीषाधिया वापि कुमार्गोऽप्यवलम्बितः ॥१४॥ †
परं सम्प्रति को लाभः परस्परजिगीषया ।
येन युद्धं नु जायेत पण्डितानां परस्परम् ॥१५॥
अथ चेदाकुलाः सन्ति भवन्तो विजिगीषया ।
दर्शयन्तु तदा शौर्यं शास्त्रार्थे साम्यवादिभिः ॥१६॥

---

* यथा "मिलिन्द प्रश्न" नामके बौद्धग्रन्थे प्रारम्भ एव पण्डितराजन्ययोः शास्त्रार्थपद्धतिगतो भेदः प्रदर्शितः ।

† यथा दर्शनग्रन्थेषु प्राचीनैः वैदिकैः बौद्धैः जैनैश्च विद्वद्भिः परमत-खण्डनावसरे भूयांसोऽपशब्दाः प्रयुक्ताः । एतद्विषयकं विस्तृतं विवरणं जिज्ञासुभिः श्री पं० सुखलाल संघवी प्रणीते "दर्शन अने चिन्तन" इति नामके हिन्दी गुजराती ग्रन्थेयो स्वलोकनीयम् ।
( हिन्दीग्रन्थे पृ० ८०—१०६, गुजरातीग्रन्थे पृ० ११६६-१२५३)

अधुनेश्वरसम्बन्धे धर्मे चापि तदाश्रिते ।
क्रियन्ते बहवः प्रश्ना नूतना अधुनातनैः ॥१७॥
तेषामद्य समाधानं जनसन्तोषकारकम् ।
कार्यं लोकव्यवस्थायै शास्त्रार्थकुशलैर्बुधैः ॥१८॥
एकोऽपि विषयो नास्ति प्राचीनः कोऽपि तादृशः ।
यो नवीनविचाराणां पण्डितैर्नैव खण्डितः ॥१९॥
स्वयं संस्कृतशिक्षाया विषये बहुलेखकैः ।
तीव्रा विरोधिनो भावा भूयांसः प्रकटीकृताः ॥२०॥ †
भवतां वस्तुतः कर्तुं शास्त्रार्थं शक्तिरस्ति चेत् ।
कुर्वन्तु सकलाः सर्वैर्नव्यसिद्धान्तवादिभिः ॥२१॥
परं शान्त्या मृदुगिरा गाम्भीर्येण च वादिनः ।
भवद्भिर्विजिताः स्युश्चेत्तदा युष्मद्यशो भवेत् ॥२२॥
अतो रीतिमिमां हित्वा विदुषां हास्यकारिणीम् ।
शास्त्रार्थं खलु कुर्वन्तु भवन्तः शान्तिपूर्वकम् ॥२३॥
स्नेहश्रद्धादरौदार्य-धैर्यप्रीतिपुरस्सरम् ।
गिरा मधुरया सम्यक् शास्त्रचर्चा विधीयताम् ॥२४॥

सस्मितेन मधुरेण मञ्जुना
वर्षतेव नतिशीलसम्पदम् ।
भाषितेन मृदुना सुधीजनैः
शास्त्रचिन्तनसुधा निपीयताम् ॥

## तृतीयः सन्देशः

( यज्ञादिषु सभादिषु च समवेतानां पण्डितानां परस्परं छिद्रान्वेषणात्मिकां प्रवृत्तिमुद्दिश्य )

इदं तु दृष्ट्वा दुर्दृश्यं भृशं रोदिमि दुःखिता ।
यज्ञादौ पण्डिता यत्तु कलहं कुर्वते मिथः ॥१॥

---

† जन ( मासिक-पत्र, कलकत्ता ) जुलाई १९५६ ।
नया समाज ( मासिक-पत्र ) कलकत्ता ) फरवरी १९५७ ।
सरिता ( मासिक-पत्र, नई दिल्ली ) मई १९६२

यज्ञे विवाहे श्राद्धे वा पूजापाठादिकर्मणि ।
भवन्ति मिलिता दैवाद् भूयांसो यत्र पण्डिताः ॥२॥
तत्रैकैकं समालम्ब्य विषयं क्षुद्रमप्यहो ।
स्ववैदुष्यप्रकाशाय विवादं कुर्वते बुधाः ॥३॥
कुत्र केन कृताऽशुद्धिः कुत्र कस्याऽभवत् त्रुटिः ।
अस्यैवान्वेषणे सर्वे दृश्यन्ते दत्तचेतसः ॥४॥
अशुद्धिरेका संप्राप्ता यदि केनापि कस्यचित् ।
तदाऽऽक्रामति तत्कालं पण्डितोऽपरपण्डितम् ॥५॥
अहमेव महान् ज्ञाता अहमेव महान् सुधीः ।
इति ज्ञापयितुं सर्वे प्रयतन्ते यथाबलम् ॥६॥
पण्डितानामनेनैव दोषेण बहुकर्मसु ।
विलम्बो जायते भूयान् कार्यहानिश्च जायते ॥७॥
अत एव च भूयांसो यजमानजना अपि ।
शङ्कन्तेऽधिकसंख्यानां पण्डितानां निमन्त्रणे ॥८॥
इदं च निखिलं दृश्यं दृष्ट्वा श्रुत्वा च पण्डिताः ।
यादृशं जायते कष्टं तद् वक्तुं नैव पारये ॥९॥
किं करोमि ? क्व गच्छामि ? किं ब्रुवे ? कं निवारये ।
म्रिये वा कथमित्येवं शोचन्ती यामि मूर्च्छनाम् ॥१०॥
यदि कुत्राऽप्यशुद्धिः स्यात् यदि कुत्रापि वा त्रुटिः ।
परमावश्यकं मन्ये तदा तस्या निवारणम् ॥११॥
परं तत् खलु कर्तव्यं शान्तिसम्मानपूर्वकम् ।
संकेतेन च, येन स्यादुपहासो न कस्यचित् ॥१२॥
परमेतादृशो भावः पण्डितेषु न दृश्यते ।
पण्डिता हन्त हृष्यन्ति पण्डितानामनादरे ॥१३॥
अहो मे तादृशं भाग्यं कदा भव्यं भविष्यति ।
यदा द्रक्ष्याम्यहं प्रीतिं पण्डितानां परस्परम् ॥१४॥
मात्सर्य्यमार्य्यपुरुषा विनिवार्य्य सर्वे
सौहार्दमाशु परितः परिबर्धयन्तु ।

लज्जास्पदं किमिदं यदहो भवन्तः
सज्जा भवन्ति निजवर्गविमाननायै ॥१५॥

## चतुर्थः सन्देशः

( धार्मिकेषु विचारेषु व्यवहारेषु च असामञ्जस्यमुद्दिश्य )

इदं दृष्ट्वाऽपि मे दुःखं यद्धर्मविषयेऽधुना ।
विचारा व्यवहाराश्च विदुषां दुर्बला भृशम् ॥१॥
पण्डितानां समाजेऽपि स्वयं धर्मोपदेशके ।
दृश्यन्ते विविधाचारा धर्मशास्त्रविरोधिनः ॥२॥
गतेऽपि वयसि प्रायः स्थितेषु तनयेष्वपि ।
विश्रुता अपि विद्वांसो दृष्टा उद्वाहकारिणः ॥३॥
अष्टवर्षा भवेद् गौरीतिगिरो गानतत्परैः ।
विवाहः क्रियते प्रायः कन्यानां विंशवत्सरे ॥४॥
अथ वर्णाश्रमाचारप्रचारैकपरायणैः ।
बुधैः वर्णाश्रमो धर्मः स्वयमेव न पाल्यते ॥५॥
किमु तैस्तनयाः स्वीया विहिता ब्रह्मचारिणः ।
स्वयं वा किमु वार्द्धक्ये संन्यासो गृह्यते नु तैः ॥६॥
जानद्भिरथ सम्पूर्णान् संस्कारान् षोडशाऽधुना ।
संस्कारा निजबालानां क्रियन्ते कति पण्डितैः ॥७॥
ब्रह्मचर्याश्रमः सर्वः समावर्तनमेव च ।
उभयं याममात्रेण धर्माचार्यैः समाप्यते ॥८॥
बाल्ये विवाहं बालानां तिलकग्रहणं तथा ।
वेश्यानृत्यादिकं चापि बुधाः किं कारयन्ति नो ॥९॥
वेदानां प्रत्यहं पाठो धर्मप्रवचनं तथा ।
ब्राह्मणानां कृते धर्मः परमावश्यको मतः ॥१०॥
परं पण्डितलोकेषु वेदानां पठनं प्रति ।
उत्कण्ठा वा प्रयत्नो वा प्रायो नैवाऽवलोक्यते ॥११॥

भृतकाध्यापकपदं स्पष्टं शास्त्रेषु गर्हितम् ।
परं तत्प्राप्तये यत्नं पण्डिताः कं न कुर्वते ॥१२॥
आङ्गलभाषां सभामध्ये निन्दद्भिरपि पण्डितैः ।
शिक्ष्यन्ते बालिका बालाः स्त्रीयास्तामेव यत्नतः ॥१३॥

एवमेव—

धर्मशास्त्रेष्वनिर्दिष्टा अप्याचारा अनेकशः ।
पण्डितैरथ मन्यन्ते धर्मत्वेनातिसम्मताः ॥१४॥
द्विजानां द्विजपक्वान्न-भोजने बाधकं वचः ।
श्रुतौ स्मृतौ पुराणे वा क्वचिन्नैवोपलभ्यते ॥१५॥ ❀
परन्तु विदुषामस्मिन् विषये त्वाग्रहो महान् ।
अपि पण्डितपक्वान्नं पण्डिता नैव भुञ्जते ॥१६॥
पण्डितेषु समेतेषु कस्याञ्चिदपि संसदि ।
प्रबन्धो भोजनस्यैव प्रायो भवति दुष्करः ॥१७॥
अंगारकर्कटीं † केचित् केचिच्च द्विदलौदनम् ।
अपरे भोक्तुमीहन्ते केवलं शाकशष्कुलीः ॥१८॥
एवं सर्वेऽपि विद्वांसः पृथक् पाकपरायणाः ।
कालं शक्तिं तथा द्रव्यं नाशयन्ति वृथा बहु ॥१९॥
चुल्लीनां हण्डिकानां च करीषेन्धनयोस्तथा ।
प्रबन्ध एव भूयांसो भवन्ति विकला जनाः ॥२०॥
पाके परिश्रमभयात् चिपुटस्य च वर्जनात् ।
दुग्धं दधि फलान्येव केचिदिच्छन्ति पण्डिताः ॥२१॥

---

❀ अपितु समर्थनमेव लभ्यते । यथा—

"लोके हि ब्राह्मणान् भोजयेदिति विधौ किं केन कथम् इत्याकाङ्क्षायां तृप्तिमुद्दिश्य ओदनेन द्रव्येण शाकसूपादिपरिवेषणप्रकारेण इति यथा उच्यते......... ।"

ऋग्वेदभाष्यभूमिकायां पौरुषेयत्वापौरुषेयत्वप्रकरणे सायणाचार्यः ।

† लिट्टी, वाटी, गँकैया इत्यादिनाम्ना लोके प्रसिद्धं भोज्यम् ।

निखिलोऽपि प्रबन्धश्चेदनुकूलो न जायते ।
तदा नु बहवो दृष्टा रोषाविष्टा मनीषिणः ॥२२॥
स्वपाकस्याग्रहादेवं विदुषामधिवेशने ।
विविधा अनुभूयन्ते बाधाः संयोजकैर्जनैः ॥२३॥
एवं घृतादिनिष्पन्नं मिष्टान्नं शूद्रपाचितम् ।
ब्राह्मणैरपि भोक्तव्यं स्मृतिकाराः प्रचक्षते ॥२४॥
तथाऽप्यनेके विद्वांसो मिष्टान्नं नैव भुञ्जते ।
स्वं च ख्यापयितुं लोके यतन्ते धार्मिकोत्तमम् ॥२५॥
सेवाकर्मणि शूद्रास्तु नियुक्ताः स्मृतिभिः स्वयम् ।
सच्छूद्राणां जलं ग्राह्यं ताभिश्चैवोपपादितम् ॥२६॥
तथाप्यनेकैर्विद्वद्भिर्जलपानादिकर्मणि ।
सच्छूद्रा अपि वर्ज्यन्ते किमिदं धर्मसम्मतम् ॥२७॥
एवञ्चेत् पण्डितैरेव स्वयं धर्मो न पाल्यते ।
अधर्मो धर्म इत्येवं ख्याप्यते चेन्निजेच्छया ॥२८॥
तथा कथन्नु धर्मस्य संभवेत् परिरक्षणम् ।
विदुषां वापि सम्मानः कथं स्याज्जनसंसदि ॥२९॥
अतः समस्तैर्विद्वद्भिस्तथा यत्नो विधीयताम् ।
यथा वास्तवरूपेण धर्मरक्षा भवेद् भुवि ॥३०॥
अथ चेन्मन्यते नैते नियमाः सकला अपि ।
साम्प्रतं रक्षितुं योग्या देशकालविपर्ययात् ॥३१॥
तदा कथं न सर्वेषां कृते सम्मिल्य पण्डितैः ।
व्यवस्था क्रियते काचिद् देशकालानुसारिणी ॥३२॥
परन्तु पण्डिताः प्रायो योग्यताया अभावतः ।
संस्कृतज्ञसमाजे च गर्हणाया भयात्तथा ॥३३॥—
तथा धार्मिकलोकेभ्यो लाभाभावस्य शङ्कया ।
नवधर्मव्यवस्थाया वार्तामपि न कुर्वते ॥३४॥
वाचा सनातनं धर्मं श्लाघन्ते ते तु साग्रहम् ।
परं कार्येऽनुवर्तन्ते नवीनामेव पद्धतिम् ॥३५॥

व्याघातेनामुना चैव वचन-व्यवहारयोः ।
पण्डितानां वचः प्रायो यथार्थं नैव मन्यते ॥३६॥
अतो धर्मस्य सम्बन्धे वाणीव्यापारयोर्बुधैः ।
विरोधपरिहारार्थं कर्तव्यः कोऽपि निर्णयः ॥३७॥
आत्मनस्त्वखिलं कार्ये मान्यता देशकालयोः ।
किन्त्वन्येषां कृते नित्यं धर्मरक्षानुशासनम् ! ॥३८॥
ईदृशो द्विविधो भावः सुप्रबुद्धयुगेऽधुना ।
न प्रवर्तयितुं पूर्णेनेश्वरेणापि शक्यते ॥३६॥
अतः सर्वं विविच्येदं विद्वद्भिर्बुद्धिपूर्वकम् ।
प्राच्यनव्याग्रहं हित्वा कार्या काचिद् व्यवस्थितिः ॥४०॥
धर्मो धर्म इति प्रायः क्रन्दन्ति बहुपण्डिताः ।
परं क्रन्दनमात्रेण धर्मरक्षा सुदुर्लभा ॥४१॥
पाल्यन्तां नियमाः सर्वे प्राणान् दत्वापि पण्डितैः ।
अथवा तदशक्यत्वे पन्था निर्मीयतां नवः ॥४२॥
द्वयोरेकतरस्यैवाश्रयणेन विचारयोः ।
धर्मस्य धार्मिकानां च मर्यादा रक्षिता भवेत् ॥४३॥

अथ च—

एषा पाश्चात्यदेशीया सभ्यतासुन्दरी नवा ।
प्रविष्टा याऽधुना देशे गेहे गेहे जने जने ॥४४॥
चाकचिक्यमयै रूपैरेतस्या हन्त मोहकैः ।
पण्डिता अपि भूयांसो दृष्टा आकृष्टचेतसः ॥४५॥
साम्प्रतं तेऽपि हस्तेषु घटीयन्त्राणि बिभ्रति ।
"सेफ्टी रेजर" द्वारा च स्वयं क्षौरं प्रकुर्वते ॥४६॥
विवाहाद्युत्सवे तेषां जलपानादिकर्मणि ।
"कुर्सी-टी-टेबुला" दीनां व्यवस्था दृश्यते नवा ॥४७॥
सेविकाः 'प्लेट' पात्रेषु भुक्त्वा लवणपाचिताः ।
चीनीपात्रेषु विद्वद्भिश्चायपानं विधीयते ॥४८॥

एवञ्चेत् संस्कृताचार्यैः सभ्यताऽङ्गीकृता नवा ।
तदा तदेव कुर्वाणाः कथमन्येऽपराधिनः ॥४९॥
बहवः पण्डिता हित्वा नापितानधुना स्वयम् ।
सौविध्यार्थं स्वहस्तेन कुर्वते श्मश्रुमुण्डनम् ॥५०॥
तदा नापितवंश्येन संस्कृतज्ञेन शक्यते ।
पूजापाठादिकं स्वीयं स्वयं कर्तुं कथं नहि ॥५१॥

पुनश्च—

सन्ति केचिद् बुधा नूनं प्राचीनाचारपालकाः ।
तेषामेव सुता जाताः परं तस्य विरोधिनः ॥५२॥
पिता बिभर्ति "चौबन्दीं" "कोटं" धारयते सुतः ।
पिता पचति हस्तेन पुत्रः खादति "होटले" ॥५३॥ ❀
पित्रा पापभयाद् येन पनड्डी जातु नो धृता ।
सुतस्तस्य महा "बूटं" धारयन् कुरुतेऽशनम् ॥५४॥
यत् पित्रा हिन्दुभिः सार्धं स्पर्शेऽपि विहिता घृणा ।
तनयस्तस्य "पार्टीसु" भुनक्ति यवनैः सह ॥५५॥
धर्मदृष्ट्या धृतं येन विदुषा नाऽङ्गरक्षकम् ।
"सूटबूट"—समायुक्तस्तत्सुतः "साहबो"ऽधुना ॥५६॥
विहिताऽजीवनं येन सन्ध्या होराद्वयं सदा ।
गायत्रीमपि तत्पुत्रः क्षणार्धं न जपत्यहो ॥५७॥
कृतं विदेशयात्रायाः खण्डनं येन सर्वदा ।
मनस्तस्य सुपुत्रस्य विदेशेष्वेव मोदते ॥५८॥
पिता यस्य सुविख्यातो देशे धर्मोपदेशकः ।
तत्सुतः साम्प्रतं जातः साम्यवादप्रचारकः ॥५९॥
येषां धौतेषु न दृष्टा कदाचिन्मुक्तकच्छता ।
नील "लुङ्गी" धरास्तेषां विचरन्त्यधुना सुताः ॥६०॥

---

❀ कोष्ठाङ्किताः शब्दाः अंग्रेजीहिन्दीभाषयोः अवगन्तव्याः ।

दशा पण्डितपुत्राणामथेदानीं यदीदृशी ।
तदा सामान्यलोकानां भविता कीदृशी दशा ॥६१॥
अतः सर्वमवेक्ष्येदं पण्डितैः सूक्ष्मया दृशा ।
अधुना धर्मसम्बन्धे कर्तव्यः कोऽपि निर्णयः ॥६२॥
दृष्ट्वापि स्वगृहस्येमां लीलां, सम्मील्य लोचने ।
धर्मशिक्षणमन्येषामुचितं प्रतिभाति नो ॥६३॥

सम्यक् परिस्थितिमिमामवलोक्य सर्वा—
मात्मानमेव च विधाय तथोपमानम् ।
धीरेण धर्मविषये सुविवेकपूर्णः
कालोचितो हितकरश्च विधिर्विधेयः ॥६४॥*

## पञ्चमः सन्देशः

( वर्तमानभविष्यतोरुपेक्षां, भूतकालैकनिष्ठां, परिवर्तनेषु पश्चाद्गामिताञ्च उद्दिश्य )

इदं दृष्ट्वापि मच्चित्तं नित्यं दोदूयते चिरात् ।
भूतार्थेष्वेकमात्रं यद् विद्वांसो विपुलादराः ॥१॥
भूतं दृष्ट्वा भविष्यच्च वर्तमानं तथा च यः ।
समीक्ष्य कार्यं कुर्वीत स नरः पण्डितो मतः ॥२॥
विदुरादिभिराचार्यैः समस्तैर्नीतिकोविदैः ।
समीक्ष्यकारिता बुद्धेः प्रथमं लक्षणं मतम् ॥३॥
भूतार्थैकसमासक्ता दृष्टिः किन्तु मनीषिणाम् ।
वर्तमानं भविष्यं च प्रायो नैवाऽवलोकते ॥४॥

---

* अस्मिन् विषये निम्नाङ्किता निबन्धा अपि अवलोकनीयाः ।—
१—वेदान्तधर्म ( स्वामी विवेकानन्द ) पृ० १४०
२—जाति संस्कृति और समाजवाद ( स्वामी विवेकानन्द ) पृ० ५०-५५
३—साप्ताहिक सिद्धान्त ( सम्पादकीय ) २२ दिसम्बर १९४२
४—महामना मालवीय जी के लेख तथा व्याख्यान (धार्मिक) मू०-३-५०

भूताग्रहमयः पाशैः प्रायो निगडिताः पदाः ।
विदुषां न प्रसर्पन्ति वर्तमाने भविष्यति ॥५॥
इदं शास्त्रेषु निर्णीतम् इदं प्रोचुः पुरातनाः ।
इदमीदृगकुर्वन्त पितरश्च पितामहाः ॥६॥
यत्किञ्चित् पूर्वजैः प्रोक्तं यत्किञ्चिल्लिखितं च तैः ।
यच्च किञ्चित् कृतं तस्मात् किमन्यन्नूतनं भवेत् ॥७॥
इति मन्त्रं जपन्तस्ते सुनिमलितलोचनाः ।
महत्त्वं नहि पश्यन्ति वर्तमानभविष्ययोः ॥८॥
अतो नूतनकृत्याणां देशकालोपयोगिनाम् ।
निश्चये व्यवहारे वा न पुरोगामिनो बुधाः ॥९॥
पश्चात्तदेव कुर्वन्ति यद्यप्यन्यैः कृते सति ।
परन्तु सुसमीक्ष्यादौ प्रवर्तन्ते स्वयं नहि ॥१०॥

तथा हि—

प्रारम्भे पण्डितैराङ्ग्ल्या महती गर्हणा कृता ।
अस्या अध्ययने चापि नास्तिक्यं खलु घोषितम् ॥११॥
परमद्य तु तैरेव त्यक्त्वा संस्कृतभारतीम् ।
स्वगृहे श्रद्धयाऽत्यन्तं पूजा तस्या विधीयते ॥१२॥
शूद्राणां संस्कृताधीतेर्विरोधो निखिलैर्बुधैः ।
विहितः सुबहोः कालात् पाठशालासु सर्वतः ॥१३॥
परमद्य तु तास्वेव पाठशालासु पण्डितैः ।
आनीयानीय पाठ्यन्ते बलादस्पृश्यबालकाः ॥१४॥
कदाचित् समये काशीविश्वविद्यालये पुरा ।
विवादो विपुलो जातः कल्याणीवेदपाठने । १५॥
परमद्योत्तरप्रान्ते भूयांसः खलु पण्डिताः ।
परीक्षानियतान् मन्त्रान् पाठयन्त्यखिलानपि ॥१६॥
अन्त्यजानां प्रवेशस्य निषेधाय तु मन्दिरे ।
बहुभिः साग्रहं पूर्वं बहुकोलाहलः कृतः ॥१७॥

परं साम्प्रतमस्पृश्यैर्दूषितेऽपि सुरालये ।
बहवः परिडता यान्ति अर्चन्ति च महेश्वरम् ॥१८॥
अस्पृश्यैः सह सम्भोजं श्रुत्वाऽपि श्रवणेन ये ।
कुप्यन्ति स्म विरोधं च कुर्वन्ति स्म समन्ततः ॥१९॥
त एव संस्कृताचार्याः प्रशिक्षणकलालये ।
अस्पृश्यैः सह भुञ्जन्ति विहारे बहुशोऽधुना ॥२०॥
ये पंक्तिपावना विप्रा इतरैर्ब्राह्मणैः सह ।
जलपानेऽपि सङ्कोचं चक्रुः सम्मानगुप्तये ॥२१॥
त एव धनलोभेन यशोमानार्थमेव वा ।
पर्यटन्ति विदेशेषु स्वच्छन्दमधुना सुखम् ॥२२॥
शिक्षायां नूतनाः प्रायो विषया निखिला अपि ।
वर्जिता अभवन् पूर्वं बुधैः संस्कृतशिक्षणे ॥२३॥
परं सम्प्रति सर्वेऽपि विषया नूतनाः खलु ।
बुधैः संस्कृतशिक्षायां साग्रहं सन्निवेशिताः ॥२४॥
अष्टाध्यायीपथा नूनं ज्ञानं व्याकरणस्य वै ।
जायते स्वल्पकालेन स्वल्पेनैव श्रमेण च ॥२५॥
अत एवाधुना देशे बहुसंस्कृतपरिडतैः ।
प्राचीनशब्दशास्त्रस्य प्रचाराय प्रयत्यते ॥२६॥
हरिशंकरपाण्डेयैः ब्रह्मदत्तमहाशयैः ।
गोपालशास्त्रिभिश्चापि प्रयत्नः क्रियते बहुः ॥२७॥
परं प्राचीनविद्वांसो मत्वाऽनर्थकरीमिमाम् ।
पद्धतिं दूषयामासुर्विरोधं चापि चक्रिरे ॥२८॥
इदानीन्तु पुनर्मत्वा लाभं पद्धतिना तया ।
प्रशंसन्तो विलोक्यन्ते तामेव बहवो बुधाः ॥२९॥
एवं प्रायोऽन्यलोकानां कृत्वाऽनुकरणं यदि ।
पश्चात्तान्येव कार्याणि विधीयन्ते मनीषिभिः ॥३०॥—
तदा कथन्न प्रागेव सर्वं सम्यग् विविच्य तैः ।
निर्धार्येत नवः पन्थाः सञ्चाल्येत स्वयं तथा ॥३१॥

तथा सति भवेत् कश्चिदधर्मो यदि, सह्यताम् ।
लभ्यतेऽनुकृतौ यस्मान्न वा धर्मो न वा यशः ॥३२॥
नूनं श्वो यदि कर्तव्यं परानुकरणं बलात् ।
तदद्यैव स्वयं कृत्वा यशः कस्मान्न लभ्यते ॥३३॥
वीरो नूतनपन्थानं निर्माय लभते यशः ।
इतरे तु पुनः सर्वे गतानुगतिका जनाः ॥३४॥
वंशे पथिकृतां जाता भवन्तो ननु पण्डिताः ।
तदिदानीं नवः पन्थाः पुनर्निर्मीयते न किम् ॥३५॥

पश्यन्त्यहो प्रतिदिनं परिवर्तनानि
कुर्वन्त्यथानुकरणं च पुनः परेषाम् ।
आदौ तदा नवयुगोचितरीतिनीति—
प्रस्थापने स्वयमहो न कथं यतन्ते ॥

## षष्ठः सन्देशः

( वर्तमानयुगस्य नवीनविचाराणां परिज्ञाने तथा तेषां हेयोपादेय-बुद्ध्या परीक्षणे च नितान्तमौदासीन्यमुद्दिश्य )

इदं दृष्ट्वाऽपि मच्चित्ते संकोचो जायते महान् ।
यन्नवीनविचारेषु पण्डितैर्दृग् न दीयते ॥१॥
अद्यैतस्मिन् युगे नव्ये नवशिक्षितमण्डले ।
नवीनैव विचाराणां धारा वहति सर्वतः ॥२॥
अध्यात्मविषये धर्मे दर्शने पुण्यपापयोः ।
वर्णाश्रमव्यवस्थायां कार्याकार्यविनिर्णये ॥३॥—
जातिभेदेऽर्थनीतौ च ईश्वरे देवतासु च ।
पाताले नरके स्वर्गे तथा लोकान्तरेष्वपि ॥४॥—
विषयेष्वेषु सर्वेषु नवशिक्षणदीक्षिताः ।
नवेन दृष्टिकोणेन विचारं कुर्वतेऽधुना ॥५॥
पाश्चात्यज्ञानविज्ञान-सम्पर्काद् भारतेऽधुना ।
भारतीयविचारेषु क्रान्तिर्जाता गरीयसी ॥६॥

प्राचीनेषु विचारेषु विश्वासेषु च साम्प्रतम् ।
आस्था शिक्षितलोकानां विनश्यन्ती विलोक्यते ॥७॥
वैज्ञानिकविचाराणां झञ्झावातेन भूयसा ।
प्राचीनव्यवहाराणां बहुवृक्षा निपातिताः ॥८॥
विचारैः साम्यवादीयैरपीदानीन्तने युगे ।
शिरो बुद्धिमतां नूनं बहूनां परिवर्तितम् ॥९॥
अद्य केनापि लोकेन शिक्षितेन जडेन वा ।
प्रभावान्नवभावानां पृथक् स्थातुं न शक्यते ॥१०॥
न च केवलमाङ्ग्लज्ञैः संस्कृतज्ञैर्बुधैरपि ।
प्राचीना बहुसिद्धान्ता विद्धास्तर्केषुभिः खरैः ॥११॥ ❀

यथा हि—

श्रीमद्रामावतारेण विख्यातेन मनीषिणा ।
सिद्धान्ता बहवः प्राच्या नीता आलोच्यतां भृशम् ॥१२॥[1]
श्रीमत्प्रमथनाथेन भट्टाचार्येण धीमता ।
अस्पृश्यतादयो भावा अधर्म्या एव घोषिताः ॥१३॥[2]
वेदविद्याप्रवीणेन श्रीमच्छ्रीपादशास्त्रिणा ।
नरक-स्वर्ग-पातालाः पृथिव्यामेव साधिताः ॥१४॥[3]
साधुना शान्तिनाथेन भारतीयमनीषिणाम् ।
सर्वे दार्शनिका वादा आद्योपान्तं विखण्डिताः ॥१५॥[4]
श्रीमद्भगवदाचार्यवर्येण स्वामिना तथा ।
विचारा बहवः प्रत्नाः सोपहासं निराकृताः ॥१६॥[5]

---

❀ अस्मिन् विषये तत्तद्विद्वद्भिः प्रणीता निम्नाङ्किता ग्रन्था अवलोकनीयाः—
१—परमार्थदर्शनम्, साधिकरणम्, सवार्तिकम् ।
२—सनातनी हिन्दू ( वंगभाषायां लिखितम् )
३—महाभारत की आलोचना, दो भाग ।
४—प्राच्य दर्शन समीक्षा ।
५—विविधाः संस्कृत-हिन्दी-गुजराती-ग्रन्थाः ।

(अग्रेऽपि)

सुविख्यातेन विदुषा श्रीमोतीलालशास्त्रिणा ।
अनेके धर्मसिद्धान्ता घोषिता देशनाशकाः ॥१७॥[6]
श्रीमत्केशवसंज्ञेन परिडतेन सुयुक्तिभिः ।
प्राचीनोपनिषद्व्याख्या दूषिताश्चापि खरिडताः ॥१८॥[7]
विदुषा तर्कतीर्थेन श्रीमल्लक्ष्मणशास्त्रिणा ।
धर्माध्यात्मविचाराणां सुभृशं भर्त्सना कृता ॥१९॥[8]
विवेचकवरेण्येन सम्पूर्णानंन्दवर्मणा ।
प्राचीना धारणा बहुशो निराधारा निरूपिताः ॥२०॥[9]
श्रीमता राहुलेनापि विचारा बहवो नवाः ।
प्राचीनधर्मसिद्धान्तविरुद्धाः प्रतिपादिताः ॥२१॥[10]
एषां नवमतानान्तु निष्पक्षं परिशीलनात् ।
अवश्यं जायते पुंसां बुद्धिश्रद्धाविपर्ययः ॥२२॥
विपर्ययमिमं सर्वं दृष्ट्वा प्राचीनपंडिताः ।
प्रायशो नवलोकेभ्यः कुप्यन्ति च शपन्ति च ॥२३॥

---

६—संस्कृति और सभ्यता । (महान् ग्रन्थः) अन्ये च अनेके निबन्धाः ।
७—औपनिषदिक जीवनसौख्य (मराठीभाषायां लिखितम् )
८—हिन्दूधर्मकी समीक्षा तथा वैदिक संस्कृति का विकास ।
९—"गणेश" ब्राह्मण, सावधान तथा अन्येऽपि संस्कृतिसम्बन्धिनो लेखाः ।
१०—अनेके ग्रन्था निबन्धाश्च ।

❁ एषु विषयेषु पुनरेतेऽपि ग्रन्था अवश्यं द्रष्टव्याः —

१—मानवधर्मशास्त्रम् तथा पुरुषार्थ, डा० भगवान दास ।
२—मानवार्षभाष्यम्, इन्दिरारमण शास्त्री ।
३—दर्शन अने चिन्तन ( हिन्दी, गुजराती ) श्री प० सुखलाल जी संघवी ।
४—लोकायत दर्शन ( अंग्रेजी, बँगला ) श्री देवीप्रसाद चट्टोपाध्याय ।
५—हिन्दुजाति विनाश के द्वार पर, श्री एम० के० परािक्कर ।
६—संस्कृति संगम ( बँगला ) श्री क्षितिमोहन सेन शान्तिनिकेतन ।
संस्कृति संगम ( मराठी ) दत्तात्रेय केशव केलकर, पूना ।
७—जाति, संस्कृति और समाजवाद, स्वामी विवेकानन्द ।
८—भारतीय समाज का वैज्ञानिक विश्लेषण डा० भगवत शरण उपाध्याय ।

परं गालिप्रदानेन निन्दया व्यथयापि वा ।
प्रभावो नवभावानां निरोद्धुं नैव शक्यते ॥२४॥
एतादृश्यां स्थितौ तेषां विचाराणां परीक्षणम् ।
पण्डितानां कृते ज्ञेया परमावश्यकी क्रिया ॥२५॥
को दोषः को गुणास्तेषु हानिर्लाभोऽथवा च कः ।
किं युक्तं किमु वाऽयुक्तं ग्राह्यं त्याज्यं तथा च किम् ॥२६॥
एताभिर्दृष्टिभिस्तेषां सम्यक् कृत्वा विवेचनम् ।
तेषां पक्षे विपक्षे वा मतं देयं मनीषिभिः ॥२७ ।
आदौ युक्त्यादिभिस्तेषां संसाध्या दोषयुक्तता ।
युक्त्यादीनामभावे तु स्वीकर्तव्या विमत्सरम् ॥२८॥
परं नवविचाराणां सम्यग् ज्ञाने परीक्षणे ।
ग्रहणे वा विरोधे वा बुधा मीलितलोचनाः ॥२९॥
अनयोपेक्षया नव्यज्ञानाध्ययनवर्जिताः ।
भवन्ति पण्डिताः प्रायः सर्वे संकीर्णबुद्धयः ॥३०॥
अतएव नवप्रत्न-श्रेष्ठाश्रेष्ठत्वनिर्णये ।
अनिश्चितधियः सर्वे पण्डिताः प्रायशोऽधुना ॥३१॥
किन्तु प्राचीननव्यानां संघर्षसमयेऽधुना ।
नहि पण्डितलोकानां युज्यते मौनधारणम् ॥३२॥
पण्डितो मन्यते प्रायः सर्वैः प्रतिनिधिर्महान् ।
प्राचीनार्यविचाराणां वक्ता संरक्षकस्तथा ॥३३॥
अतो निर्मत्सरं सर्वा ज्ञातव्याः स्थापना नवाः ।
ततस्तासां च कर्तव्याः शास्त्रैस्तर्कैर्विवेचनाः ॥३४॥
यद् ग्राह्यं तचतो ग्राह्यं यत् त्याज्यं त्याज्यमेव तत् ।
विमर्शं गहनं कृत्वा पक्षो ग्राह्यो यथोचितः ॥३५॥❀

❀ यथोक्तं पुरातनैराचार्यैः :—
अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम् ।
अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना ॥
युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ॥ (अग्रेऽपि)

एतेषां विषये ये ये ग्रन्थाश्च लिखिता नवैः ।
तेषामध्ययनं कृत्वा कार्यः कश्चन निर्णयः ॥३६॥

प्रत्न-नव्य-विषय-प्रवरत्वे
पण्डितेन परिहाय ममत्वम् ।
शास्त्र-तर्क-जनमङ्गल-बुद्ध्या
निश्चयः सपदि कोऽपि विधेयः ॥३७॥

## सप्तमः सन्देशः

( परिश्रमापेक्षया प्रतिग्रहादिद्वारा द्रव्यार्जने प्रवृत्तिमुद्दिश्य )

इदं च मे महद्दुःखं महच्चापि ममाऽप्रियम् ।
पण्डिता यत् श्रमं त्यक्त्वा प्रतिग्रहपरा भृशम् ॥१॥
परिग्रहे श्रमे चापि श्रमस्यैव सुगौरवम् ।
लोके वेदे च शास्त्रे च सर्वत्र प्रतिपादितम् ॥२॥
ये कठोरं श्रमं कृत्वा जीविकार्जन-तत्पराः ।
तेषामेव यशो लोके प्रतिष्ठा चापि जायते ॥३॥
ये पुनर्याचनां कृत्वा गृहीत्वा दानमेव वा ।
जीवन्ति, न यशस्तेषां, निन्दा हास्यं च जायते ॥४॥

---

योऽस्मत्तातस्य कूपोऽयमिति कौपं पिबत्यपः ।
त्यक्त्वा गाङ्गं पुरःस्थं तं कोऽनुशास्त्यतिरागिणम् ॥
योगवाशिष्ठे मुमुक्षुव्यवहारप्रकरणम् १८, २-४ ।

श्रद्दधानः शुभां विद्यामाददीताऽवरादपि ।
अन्त्यादपि परं धर्मम्.................॥
मनुस्मृतिः २, २३८ ।

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्याऽन्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥
मालविकाग्निमित्रे कालिदासः ।

बुद्धेः फलमनाग्रहः ।

दानेन दक्षिणाभिर्वा याचनेनापि यो जनः ।
धनमर्जयते तं तु स्वयमात्मैव गर्हते ॥५॥
प्रतिग्रहं विप्रधर्मं मन्वानैरपि पूर्वजैः ।
प्रतिग्रहणतो विप्रा वारं वारं निवारिताः ॥६॥
प्रतिग्रहप्रवृत्तानां ब्राह्मणानां यतस्ततः ।
धर्मशास्त्रेषु सर्वेषु सुस्पष्टं गर्हणा कृता ॥७॥
परं पण्डितलोकेषु भवत्सु निखिलेष्वपि ।
प्रतिग्रहणतः क्वापि विरक्तिर्नैव दृश्यते ॥८॥
न केवलं वृत्तिहीना, वृत्तिमन्तोऽपि पण्डिताः ।
प्रतिग्रहोत्सुकाः प्रायः सर्वत्रैवावलोकिताः ॥९॥
काश्यां तु "पण्डितसभा" नाम्नैका जायते सभा ।
दक्षिणा यत्र सम्पन्नैः पण्डितेभ्यो वितीर्यते ॥१०॥
तत्र पण्डितजीवास्तु अपि वैभवशालिनः ।
दक्षिणालेशलोभेन धावन्तो यान्ति निस्त्रपम् ॥११॥ ❀
अथवा धनिनां गत्वा श्रेष्ठिनां वापि वेश्मसु ।
शुश्रूषां चाटुकारान् वा बुधाः प्रायो वितन्वते ॥१२॥
परन्तु लेख-व्याख्यान-कथावाचन-पाठनैः ।
श्रमं कृत्वा धनं लब्धुं कामयन्ते न हन्त ते ॥१३॥

तथा हि—

गुणः प्रवचनं नाम परमं हितसाधनम् ।
स्वतन्त्रजीविका चेति शंसितं श्रुतिभिः स्वयम् ॥१४॥ †

---

❀ यथाह कश्चित्—

एक एव महान् दोषः शालेर्द्विजवरस्य च ।
पुनर्वसु-समृद्धोऽपि हस्तोदकमपेक्षते ॥

† यथा—"प्रिये स्वाध्यायप्रवचने भवतः । युक्तमना भवति, अपराधी-नोऽहरहरर्थान् संसाधयते, सुखं स्वपिति, परमचिकित्सक आत्मनो भवति । इन्द्रियसंयमश्च, एकारामता च, प्रज्ञावृद्धिः, यशो, लोक-

(अग्रेऽपि)

कथावाचनमप्येकं तथा कर्म द्विजन्मनाम् ।
पूर्वजैः स्वीकृतं धर्म्यं जीविकासाधनं मतम् ॥१५॥
रामायणं भारतं च श्रीमद्भागवतं तथा ।
गीता चैवोपनिषदो योगवाशिष्ठमेव च । १६॥
नाना सुभाषितग्रन्था नीतिग्रन्थास्तथैव च ।
काव्यादीनां मनोहारिप्रसंगाश्च शताधिकाः ॥१७॥
एतेषां सुस्वरं पाठात् तथा ग्रन्थार्थबोधनात् ।
साधुशिक्षाप्रचाराच्च लाभो भूयान् भवेत् किल ॥१८॥
अद्यापि यदि कथ्येत स्थाने स्थाने कथा शुभा ।
सामाजिकं धार्मिकं च सम्यक् प्रवचनं भवेत् ॥१९॥
तदात्मनः समाजस्य देशस्य च मनीषिभिः ।
श्रेयो महत् साधितं स्यात् प्रतिष्ठा च परा भवेत् ॥२०॥
परन्त्वेषाऽपि सद्वृत्तिः पण्डितैरपवर्जिता ।
इदानीं रोचयन्ते ते शुश्रूषां चाटुकारिताम् ॥२१॥
एतेषु कल्पवृक्षेषु सद्ग्रन्थेषु स्थितेष्वपि ।
विद्वांसो हन्त सीदन्ति किमाश्चर्यमतः परम् ॥२२॥
सामान्यजनतामध्ये भक्तिज्ञानोपदेशतः ।
यथा भगवतः प्रीतिर्न तथाऽन्येन केनचित् ॥२३॥
इत्येवं भगवान् प्राह स्वयमेव मुहुर्मुहुः ।
तथापि नहि विद्वांसो दृश्यन्ते तत्र सोद्यमाः ॥२४॥

अथ च—

ग्रन्थानां भूमिका-व्याख्याऽनुवादैः सह मुद्रणम् ।
अयमप्यपरः पन्था विदुषां लाभदायकः ॥२५॥

---

पंक्ति । प्रज्ञा वर्द्धमाना चतुरो धर्मान् ब्राह्मणानामभिनिष्पादयति । ब्राह्मण्यं, प्रतिरूपचर्यं, यशो, लोकपंक्तिम्। लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्ति। अर्चया च दानेन च अज्येयतया च अवध्यतया च ॥

शतपथब्राह्मणम्, का० ११, अ० ५ ब्रा० ७, क० १ ।

कार्येऽस्मिन् खलु संलग्ना भवेयुर्यदि पण्डिताः ।
व्युत्पत्या यशसा सार्धं द्रव्यलाभोऽपि जायताम् ॥२६॥
परं सम्प्रति ये ग्रन्था व्याख्यायन्ते नवा नवाः ।
भूमिकादिभिरुत्कृष्टैः प्रकाश्यन्ते च साम्प्रतम् ॥२७॥
तत्रापि दृश्यते प्रायः पुरुषार्थो विशेषतः ।
हिन्द्यांग्लविदुषामेव न तु संस्कृतवेदिनाम् ॥२८॥
अद्यापि खलु भूयांसो ग्रन्थाः संस्कृतवाङ्मये ।
प्रकाशनीया वर्तन्ते नवसज्जादिभिः सह ॥२९॥
परं पण्डितलोकानां दृष्टिस्तत्र न गच्छति ।
न तदर्थं श्रमं कर्तुं दृष्टा वा ते समुत्सुकाः ॥३०॥
सर्वं कार्यमिदं मत्वा दुरूहं दुष्करं च ते ।
पूजापाठ-प्रतीक्षायां वीक्ष्यन्ते वद्धदृष्टयः ॥३१॥
अथ चापि श्रमं कृत्वा सम्यक् चालोच्य सर्वशः ।
एकोऽपि लेखो लिख्येत प्रतिमासं विपश्चिता ॥३२॥—
तावतापि यशोलाभो वित्तप्राप्तिश्च संभवेत् ।
अभ्यासश्चापि जायेत गणना लेखकेषु च ॥३३॥
भट्टाचार्यन्नु पश्यन्तु युवानं रामशङ्करम् ।
कति वा लिखिता लेखा असंख्यास्तेन धीमता ॥३४॥
तथैव यदि जायेरन्नन्येऽपि कतिचिद्बुधाः ।
लेखकास्तेन मे भूयान् सन्तोषः स्यात् सुखं तथा ॥३५॥
परं लेखनकार्यं तु पापं मत्वा महत्तरम् ।
पण्डितैः शपथं कृत्वा सर्वथा परिवर्जितम् ॥३६॥

अपरं च—

अथ संस्कृतमध्येतुं बहवः शिक्षिता जनाः ।
उत्सुका अद्य लभ्यन्ते स्थाने स्थाने पुरे पुरे ॥३७॥
नेतारोऽध्यापका नैके बहवश्चाधिकारिणः ।
सामाजिका गृहस्थाश्च दृष्टा उत्कण्ठिता मया ॥३८॥

परं तेषां कृते कश्चित् सुबोधोऽध्यापनक्षमः ।
रीत्या सरलया, प्रायः शिक्षको नोपलभ्यते ॥३६॥
पण्डिता यदि जायेरन् तादृशाध्यापनक्षमाः ।
संस्कृतस्य प्रचारं च मन्येरन् कर्म चेन्निजम् ॥४०॥
तदा बहूनां विदुषां नगरे नगरेऽधुना ।
निर्वाहो भविता नूनं यशःसम्मानपूर्वकम् ॥४१॥
परन्तु योग्यतां लब्धुं श्रमं कर्तुं तथाविधम् ।
अन्यान् शिक्षयितुं वापि पण्डितः कोऽपि नेच्छति ॥४२॥

एवमेव—

बहुविद्यार्थिनः क्षेत्रे भोक्तुं धावन्ति निस्त्रपम् ।
परन्तु ते श्रमं कृत्वा समीहन्ते न वर्तितुम् ॥४३॥
संस्कृतं पाठयेयुश्चेदुच्चविद्यार्थिनः परान् ।
लाभो भूयान् भवेत्तेषां निश्चिन्ताः स्युस्तथा च ते ॥४४॥
क्षेत्रेषु भोजनं, वृत्तिं, दक्षिणां च निमन्त्रणम् ।
मन्यन्ते संस्कृतच्छात्राः परं सौभाग्यकारणम् ॥४५॥
एवं गुरुषु शिष्येषु पण्डितेष्वितरेष्वपि ।
यथा प्रतिग्रहे श्रद्धा दृश्यन्ते न तथा श्रमे ॥४६॥
तादृशाः पुरुषा दृष्टा अत्यन्तं विरला मया ।
एतस्या हीनवृत्त्या ये भवेयुः सर्वथा पृथक् ॥४७॥
ईदृशेन स्वभावेन विबुधैर्देववागियम् ।
स्वयञ्चापिं च ते निन्दामुपहासञ्च लम्भिताः ॥४८॥
अहो यस्यां नु भाषायां सर्वोच्चं श्रमगौरवम् ।*
तत्सेवका एव जाता एवं श्रम-पराङ्मुखाः ॥४९॥
अतो हे पण्डिता युष्मत्पादौ धृत्वा निवेदये ।
त्यक्त्वा प्रतिग्रहे प्रीतिं श्रमे भवत तत्पराः ॥५०॥

---

* यथा ऐतेरयब्राह्मणस्य" चरैवेति चरैवेति" इति श्रममहत्त्वसूचके मन्त्र-समूहे प्रतिपादितम् ।

अध्यापने प्रवचने लेखे संस्कृतशिक्षणे ।
कथायां वा श्रमं कृत्वा जीवन्तु गुरुतायुताः ॥५१॥
एवं हे निखिलाश्छात्रा भवद्भिरपि साम्प्रतम् ।
प्रतिग्रहे रुचिं त्यक्त्वा भवितव्यं श्रमोन्मुखैः ॥५२॥
नाऽदातव्यं न भोक्तव्यं यावच्छक्यं यतस्ततः ।
न च लड्डुकलोभेन कार्यः सम्मानविक्रयः ॥५३॥
यथाऽदानं विनाऽप्यन्ये दरिद्रा अपि बालकाः ।
पठन्त्येव तथा सर्वैः भवद्भिरपि पठ्यताम् ॥५४॥
अथ चेद् वृत्तिकार्श्यं स्यात् तदा कृत्वा परिश्रमम् ।
संस्कृतं पाठयित्वा वा कृत्वा वा सूत्रकर्तनम् ॥५५॥
अथवा लेखनं कृत्वा अपरेषां मनीषिणाम् ।
सम्मानेन समं नित्यं कार्यो निर्वाह आत्मनः ॥५६॥
पण्डितैरीदृशी बुद्धिर्विद्यार्थिभ्यः प्रदीयताम् ।
तथैव च स्वयं कृत्वा आदर्शः स्थाप्यतां नवः ॥५७॥

त्यागमूर्तिभिरहो नु पूर्वजै-
रर्जितं भुवि यदुज्ज्वलं यशः ।
लाभलेशवशतो न तद्बुधा
धूलिसादिह मुधा विधीयताम् ॥५८॥

## अष्टमः सन्देशः

( तमालपत्रस्य भक्षणमुद्दिश्य )

दृष्ट्वा तमालपत्रस्य भक्षणञ्चापि धीमताम् ।
मम चित्ते महद्दुःखं घृणा चैवापि जायते ॥१॥
यदा पश्याम्यहं विप्रानथ तत्रापि पण्डितान् ।
तमालपत्रनिर्माणे लग्नानेकाग्रचेतसा ॥२॥
तदा मन्मानसे क्रोधो विपुलो जायते तथा ।
यथा छिनद्म्यहं तेषां खड्गाद् हस्तावुभावपि ॥३॥
अहो विपर्ययो जातो भगवन् कीदृशो महान् ।

यत्र वासः श्रुतेरासीत्तत्र "सुर्ती" विराजते ॥४॥
दन्तहानिकरं निन्द्यं दोषवद् द्रव्यनाशनम् ।
पार्श्वभूदूषकं याञ्चाकारकं सर्वनिन्दितम् ॥५॥

भवन्त ईदृशं द्रव्यमहो भूत्वा नु शिक्षकाः ।
बद्ध्वा च महदुष्णीषं कथं खादत पण्डिताः ! ॥६॥
स्वाध्यायेऽध्यापने यज्ञे पूजापाठादिकेष्वपि ।
यूयं यदिदमश्नीथ किमु तद्धर्मसम्मतम् ॥७॥
खादन्तश्च स्वयं शिष्यानपि यत् शिक्षयन्त्यहो ।
निर्मापणादिव्याजेन तत्तु कष्टकरं महत् ॥८॥
भवन्त एव सेवन्ते निन्द्यं वस्तु यदीदृशम् ।
कथं निवारयिष्यन्ति उपदेक्ष्यन्ति वाऽपरान् ॥९॥
तस्मादिदं महाऽशुद्धं विरुद्धं लोकवेदयोः ।
मूढैरपि त्यज्यमानं द्रुतं त्यजथ पण्डिताः ॥१०॥
वसद्भिः पाठशालायां छात्रैरध्यापकैस्तथा ।
तमालं जातु न स्पृश्यमिति कार्यो विनिश्चयः ॥११॥

हरिजनैपि जातिसभाभिया,
यदधुना बहुभिः परिवर्जितम् ।
तदधुनापि सुधेव बुधैरहो,
ननु तमालदलं परिसेव्यते ॥१२॥

## नवमः सन्देशः

(निवास-वस्त्र-शयनासनादिषु स्वच्छताथाः परिष्कारस्यचाभावमुद्दिश्य)

इदञ्चाप्यपरं चित्ते मम पीड़ाकरं महत् ।
बहुभिर्देहवस्त्रादौ स्वच्छता यन्न रक्ष्यते ॥१॥

---

न स्वादु नौषधमिदं न च वा सुगन्धि
नाऽक्षिप्रियं किमपि शुष्कतमाकुचूर्णम् ।
किं चाक्षिरोगजनकं च तदस्य भोगे,
बीजं नृणां नहि नहि व्यसनं विनाऽन्यत् ॥

बहूनां विदुषां गेहे गत्वा गत्वा मयेक्षितम् ।
स्वच्छताविषये सम्यग् ध्यानं नो ददते बुधाः ॥२॥
नीचैर्धूलिमयी भूमिः उपर्युपरि जालकम् ।
भित्तयो मलिनैश्चिह्नैरङ्किताः, संकरः क्वचित् ॥३॥
तमालभक्षिणां गेहे त्वितोऽपि विकटा स्थितिः ।
निष्ठीवनेन सर्वोऽपि लक्ष्यते दूषिता मही ॥४॥
किं नाम लगति द्रव्यं प्रत्यहं गृहमार्जने ।
किन्तु सामान्यमप्येतत् कार्यं न क्रियते जनैः ॥५॥
कामसूत्रे तु शोभायाः स्वच्छतायाश्च वेश्मनः ।
वात्स्यायनेन मुनिना माहात्म्यं बहु कीर्तितम् ॥६॥ ❀
परं नियमितं यत्र जायते नैव मार्जनम् ।
तत्र शृङ्गार-शोभादि–विषये किन्नु कथ्यताम् ॥७॥
एवमेव समस्तेषु प्रायो विद्यालयेष्वपि ।
स्वच्छताविषये ध्यानं ददते नहि पण्डिताः ॥८॥
यादृशे तादृशे वापि स्थाने स्थित्वा मलीमसे ।
आचार्या अथवा शिष्याः पाठयन्ति पठन्ति च ॥९॥
"स्वच्छे स्थाने निवस्तव्यं, मार्जनीयं स्वयं गृहम् ।
भित्तयो निर्मला रक्ष्या, अपनेयं च जालकम् ॥१०॥
सुदूरेऽवकरः क्षेप्यो, दूरे निष्ठीवनं तथा ।
भवनं परितो रोप्यं तुलसीकुसुमादिकम् ॥११॥

---

❀ यथा—वेश्म च शुचि, सुसंमृष्टस्थानम्, विरचितविविधकुसुमम्, श्लक्ष्ण भूमितलं, हृद्यदर्शनम्, त्रिषवणाचरितबलिकर्म, पूजितदेवायतनं कुर्यात् ।

नह्यतोऽन्यत् गृहस्थानां चित्रग्राहकमस्तीति गोनर्दीयः ।

वात्स्यायनकामसूत्रम्, चतुर्थेऽधिकरणे प्रथमोऽध्यायः ।

गृहवस्त्रादीनां स्वच्छतासौन्दर्यादिसम्पादनविषये काव्यमीमांसायाः दशमोऽध्यायोऽपि द्रष्टव्यः ।

देवानां, प्राकृतानां च वस्तूनां, विदुषां तथा ।
आदर्शपुरुषाणां च कर्तव्यश्चित्रसंग्रहः ॥१२॥*
सुन्दराणि च वाक्यानि लेखित्वा सुन्दराक्षरैः ।
बहिरन्तस्तथा द्वारे लम्बनीयानि भित्तिषु ॥१३॥†
एवां शुभविचाराणामुदयो नहि जायते ।
हृदये गुरुशिष्याणामित्याश्चर्यपदं महत् ॥१४॥
हिन्द्वाङ्गलपाठशालानां दृष्ट्वाऽपि रमणीयताम् ।
पण्डिता अथवा छात्रास्तथा कार्यं न कुर्वते ॥१५॥
एवमेव च वस्त्राणां स्वच्छताविषयेऽप्यहो ।
बहवः पण्डिता ध्यानं प्रायेण ददते नहि ॥१६॥
बहुवेतनवन्तोऽपि बुधाः केचन वीक्षिताः ।
मया संस्कृतशालासु मलिनाम्बरधारिणः ॥१७॥
वेतनस्य तु वृद्ध्यर्थं यतन्ते ते निरन्तरम् ।
परं स्वरूपरक्षायै यत्नस्तेषां न दृश्यते ॥१८॥
वसते मलिनं वस्त्रं आसते मलिने कटे ।
शेरते मलिने तल्पे समर्था बहवो बुधाः ॥१९॥
आङ्गलप्राध्यापकेभ्योऽपि वाञ्छन्त्यधिकवेतनम् ।
व्ययं तथाविधं किन्तु कर्तुं नेच्छन्ति पण्डिताः ॥२०॥
स्थाने स्थाने मया दृष्टा बहवस्तादृशा बुधाः ।
व्ययमायानुरूपं ये वस्त्रादौ नैव कुर्वते ॥२१॥
कञ्चुकं मलिनं धृत्वा बद्ध्वोष्णीषं मलीमसम् ।
उपानद्रहिता एव विचरन्ति यतस्ततः ॥२२॥
श्रुत्वा समागमिष्यन्तं पाठशालानिरीक्षकम् ।
अथवाऽवसरे प्राप्ते विशिष्टे दैवयोगतः ॥२३॥

---

* प्राचीनानां तथा आधुनिकानाञ्च देशविदेशवासिनां संस्कृतविदुषां चित्रसंग्रहविषये कार्यालयेन सह पत्रव्यवहारः कर्तव्यः ।

† भित्तिषु अवलम्बनाय कार्यालयद्वारा प्रकाशितानि सूक्तानि संस्कृतमहत्त्वसूचकानि वाक्यानि च संग्राह्याणि ।

अन्येषां प्रेरणाद् वापि लोकलज्जाभयात्तथा ।
बुधैर्वस्त्राणि स्वच्छानि विधीयन्ते कथंचन ॥२४॥
मलिनैः वसनैः केचित् श्मश्रुवृद्धया च केचन ।
ईहन्ते प्रकटीकर्तुम् ऋषितुल्यत्वमात्मनः ॥२५॥
परन्तु नहि मालिन्याद् ऋषित्वमुपलभ्यते ।
श्मश्रुवृद्धया न वा कश्चिद् महात्मा खलु जायते ॥२६॥
अतः समस्तैर्विद्वद्भिर्देहे गेहे च वाससि ।
सततं स्वच्छता रक्ष्या यथासमयसाधनम् ॥२७॥
न वाऽडम्बरबाहुल्यं नवा दैन्यमयी स्थितिः ।
मध्यमेन पथा सर्वैर्वर्तितव्यं मनीषिभिः ॥२८॥
गेह-देह-परिधानं-भूषणाऽच्छादनास्तरण कादि वस्तुषु ।
स्वच्छता यनि षुधेन रक्ष्यते शिक्षितेषु विपुलादेश भवेत् ॥२९॥

## दशमः सन्देशः

( संस्कृतशिक्षितानां जीवने प्रायेण आध्यात्मिकोत्कर्षस्य
मनोबलस्य चाभावमुद्दिश्य )

इदं च मे महद्दुःखं यदाधुनिकशिक्षया ।
न कोऽप्याध्यात्मिकोत्कर्षः संस्कृतज्ञेषु दृश्यते ॥१॥
प्रायः संस्कृतशिक्षेयं सर्वैरपि मनीषिभिः ।
दृष्ट्याऽध्यात्मिकयाऽत्यन्तं मन्यते लाभकारिणी ॥२॥
परन्त्वाध्यात्मिको लाभः को वा सम्प्रति जायते ।
छात्राणां पण्डितानां वा इति चिन्त्यं विचारकैः ॥३॥

तथाहि—

मनसः शुचिता, सत्यं, सर्वेषां हितचिन्तनम् ।
परदुःखासहिष्णुत्वं सौहार्दं सकलैः सह ॥४॥
औदार्य्यम्, आर्जवं, साम्यं विचारव्यवहारयोः ।
ईर्ष्याऽसूयापरित्यागो दम्भपाखण्डवर्जनम् ॥५॥
निरहङ्कारिता, सौम्यः स्वभावो, नम्रता परा ।
न निन्दा न घृणा क्वापि नोपहासश्च कस्यचित् ॥६॥

लघूनामपि सम्मानः सर्वेषां गुणकीर्तनम् ।
कष्टेऽपि दृढता धर्मे दुःखेऽपि मुदिता परा ॥७॥
अलाभेऽप्यथवा लाभे तथा हर्षविषादयोः ।
निर्विकारं मनः, कामक्रोधलोभादिसंयमः ॥८॥
महीयानात्मविश्वासोऽदम्य उत्साह एव च ।
मनोबलमजेयं चाऽपराजेया सहिष्णुता ॥९॥
एतासामेव वृत्तीनां शुभानामुदयेन तु ।
आध्यात्मिकः समुत्कर्षो मानवस्याऽनुमीयते ॥१०॥
यावन्नोदयते सैषा ज्योत्स्ना हृदयमन्दिरे ।
तावन्मानवताया न प्रकाशः सुमनोहरः ॥११॥
अतस्तादृशवृत्तीनामुदये खलु संस्कृतम् ।
उपकारीति तज्ज्ञानं शिक्षाविद्भिः प्रशस्यते ॥१२॥
परं संस्कृतशिक्षेयं यादृशी दीयतेऽधुना ।
तत्राऽध्यात्मगुणोन्नत्यै व्यवस्था नास्ति काचन ॥१३॥
के केऽध्यात्मगुणास्तेषामुदयश्च कथं भवेत् ।
बाधास्तत्र च का मुख्याः कथं तासाञ्च वारणम् ॥१४॥
केन केन च यत्नेन कया भावनया तथा ।
जीवनं सुखदं शुद्धं शक्यते कर्तुमञ्जसा ॥१५॥
एतेषां विषये चर्चा चिन्तनं वाऽथ शिक्षणम् ।
नास्ति संस्कृतशिक्षाया महाविद्यालयेष्वपि ॥१६॥
तस्मादेव सुधीवृन्दे छात्राणामथवा गणे ।
नहि तन्निर्मलं दिव्यं स्वरूपमुपलभ्यते ॥१७॥

तथा हि—

मनसः शुचिता तावत् सर्वैरध्यात्मवादिभिः ।
आध्यात्मिकानां लाभानां परमो लाभ ईरितः ॥१८॥
महत्त्वं मनसः शुद्धेः यथा शास्त्रेषु कीर्तितम् ।
न तथाऽपरशुद्धीनामिति सर्वत्र निर्णयः ॥१९॥

शिक्षायाश्चरमं लक्ष्यं विद्यायाः परमं फलम् ।
ज्ञानस्यात्यन्तिको लाभो हृदयस्य पवित्रता ॥२०॥
स्नानसन्ध्याव्रतस्तोत्रपूजाभजनकर्मणाम् ।
सर्वेषामन्तिमं साध्यं केवलं शुद्धजीवनम् ॥२१॥
परं संस्कृतशिक्षायाः पारगेषु बहुष्वपि ।
प्रायशो मनसः शुद्धिर्विरलैवोपलभ्यते ॥२२॥
पूजायामथवा पाठे यज्ञेऽनुष्ठानकर्मणि ।
नियुक्तावथ माध्यस्थ्ये परीक्षोत्तरशोधने ॥२३॥
दक्षिणासु, व्यवस्थानां दाने, वादविवादयोः ।
शुद्धान्तःकरणाः प्रायो दृश्यन्ते विरला जनाः ॥२४॥
मन्यते वैदिको धर्मः सर्वश्रेष्ठोऽस्मदादिभिः ।
परं वैदिकलोकानां कीदृशी नु दशाऽधुना ॥२५॥
क्षेमेन्द्रकथिताः प्रायः सर्वे दम्भादयोऽधुना ।
संस्कृतज्ञसमाजेऽस्मिन् विलोक्यन्ते यतस्ततः ॥२६॥*
एवं साधारणैश्चापि हेतुभिर्बहवो बुधाः ।
व्यवहारपथं शुद्धं हित्वा प्राप्नुवतेऽयशः ॥२७॥
बहूनां विदुषां दोषादेतस्मादेव विश्रुतात् ।
विशुद्धा अपि विद्वांसः शङ्क्यन्ते प्रायशो जनैः ॥२८॥
अतः संस्कृतशिक्षायां व्यवस्था तादृगिष्यते ।
यथा तत्पाठकानां स्यात् जीवनं खलु संस्कृतम् ॥२९॥
यदि नो संस्कृता भावा यदि नो संस्कृताः क्रियाः ।
यदि नो संस्कृता दृष्टिः संस्कृताऽध्ययनेन किम् ॥३०॥
अतः स्वोत्कर्षलाभाय राष्ट्रस्यापि हिताय च ।
बुधैः संस्कृतशिक्षायामादर्शः स्थाप्यतां नवः ॥३१॥

---

* अवलोक्यतां क्षेमेन्द्रविरचितस्य कलाविलासस्य दम्भप्रकरणम् । एतस्यैव देशोपदेश-नर्ममालानामकौ ग्रन्थावपि अवश्यमवलोकनीयौ ।

ये ये संस्कृतसाहित्ये प्रसंगा उत्तमोत्तमाः ।
उपदेशाश्च वर्तन्ते अध्यात्मगुणवर्द्धकाः ॥३२॥*
तथैव हिन्दीभाषायामन्यभाषासु चोत्तमाः ।†
ग्रन्था ये सन्ति लोकानां चेतःसंस्कारकारकाः ॥३३॥
तेषामध्ययनस्यापि, मननस्यापि, कर्मणा—
तथैवाऽऽचरणस्यापि शिक्षणं देयमुत्तमम् ॥३४॥
शुद्धजीवननिर्वाहे काठिन्यं चेत् प्रतीयते ।
तन्निवारयितुञ्चापि पन्थाः कश्चिद् विचिन्त्यताम् ॥३५॥
केवलं पाठमात्रेण केवलञ्च परीक्षया ।
धर्माऽध्यात्मसमस्यानां समाधानं न जायते ॥३६॥
एतस्मिन् विषये सर्वैर्विद्वद्भिः शान्तिपूर्वकम् ।
विचारो गहनः कार्यो निर्णयश्चापि कश्चन ॥३७॥
धर्माऽध्यात्मगुरून् हित्वा भवतो नु पुरातनान् ।
अन्यं कं प्रार्थये, दुःखं कमन्यं वा निवेदये ॥३८॥

---

* यथा—

उपनिषदाम्, आरण्यकानाम्, गीतायाः, योगवाशिष्ठस्य, मनुस्मृतेः, महाभारतीयशान्तिपर्वणः, श्रीमद्भागवतस्य, बोधसारस्य, अष्टावक्रसंहितायाः, अध्यात्मरामायणस्य, योगसूत्रस्य, पञ्चदश्याः, उपदेशसाहस्र्याः तथा अन्येषामपि दर्शनग्रन्थानामाध्यात्मिका अंशाः ।

† आध्यात्मिकविकासविषये निम्नाङ्किता ग्रन्था अवलोकनीयाः—

१—दासबोधः, सन्त समर्थ गुरु रामदास ।
२—गीतारहस्य, लोकमान्य तिलक ।
३—विवेक और साधना, केदारनाथ ।
४—जीवनशोधन, किशोरलाल मशरूवाला ।
५—मनुष्य का विराट् रूप, } आनन्दकुमार ।
६—आत्मविकास, }
७—साधना, रवीन्द्रनाथ ठाकुर ।
८—अमृत मन्थन, डा॰ मङ्गलदेव शास्त्री ।
९—जीवनदर्शन, डा॰ मुन्शीराम शर्मा ।

पूर्णे संस्कृतसाहित्ये या विद्या या च संस्कृतिः ।
अध्यात्ममेव तस्यास्तु हृदयं निखिलैर्मतम् ॥३९॥
इदमेव परा विद्या इदमेव परो गुणः ।
इदमेव परा दृष्टिः सर्वेषां सुखशान्तिदा ॥४०॥
तदेव यदि शिक्षायामित्थं सर्वैरुपेक्षितम् ।
तदा हृदयहीनेयं शिक्षा जाता मृता यथा ॥४१॥
शिक्षणे वर्तमानेऽस्मिन् आन्वीक्षिक्या अभावतः ।
दृष्टिरेव विनष्टाऽसौ सर्वेषामीक्षणात्मिका ॥४२॥
किमिदं जीवनं, कोयमात्मा, कास्तस्य शक्तयः ।
कथं तासां विकासश्च, स्वयं वा, साधनेन वा ॥४३॥
विकाराश्च पुनर्मानाऽपमान-सुखदुःखजाः ।
शमनीयाः कथं, केन शोध्या वा चित्तवृत्तयः ॥४४॥
जीवनस्य विकासाय साफल्याय च पण्डितैः ।
सर्वैः सर्वमिदं ज्ञेयं ज्ञापनीयं च तत्त्वतः ॥४५॥
एतस्मिन् विषये केचिद् ग्रन्थाः संस्कृतभाषया ।
लेख्याः कैश्चिद्विपश्चिद्भिरिति मे प्रार्थना परा ॥४६॥
एवं मनोबलस्यापि ज्ञाने तत्साधने पुनः ।
विद्वद्भिः कृपया ध्यानं देयं तद्बोधने तथा ॥४७॥

आध्यात्मिकीं पुनरवाप्य निजां पुराणां
शक्तिं, प्रदर्श्य च बुधा व्यवहारतस्ताम् ।
सर्वैर्गुणैरुपचितो भवतां समाजो
भूयो जगद्गुरुपदं लभतां वरिष्ठम् ॥४८॥

## एकादशः सन्देशः

( समाजव्यापिनीं दीनताया हीनतायाश्च भावनामुद्दिश्य )

अयन्तु भवतां भावो मम दुःखातिदुःखदः ।
यद् भवन्तो बुधाः प्रायो दीनहीना इवासते ॥१॥

अन्यान्यभाषाभिज्ञेषु समवेतेषु सूरिषु ।
पण्डिता अवलोक्यन्ते भीता इव हता इव ॥२॥
न तेजो न समुत्साहो न मानो नाग्रगामिता ।
न प्रागल्भ्यं न वाऽमर्षः संस्कृतज्ञेषु दृश्यते ॥३॥
अदीनाः स्याम इत्येतन्मन्त्रजापजुषामपि ।
विदुषां वदनाद् याता न दैन्यदुरितच्छटाः ॥४॥
रूपं देहि जयं देहि यशो देहीति नित्यशः ।
पठन्तोऽपि बुधा दृष्टा भिक्षुका इव कातराः ॥५॥
भूयो भूयोऽपि शोचन्ती परमेतस्य कारणम् ।
नावधारयितुं किञ्चित् प्रभवामि कथञ्चन ॥६॥
को नाम दोषो भाषायां साहित्ये किन्नु कल्मषम् ।
तज्ज्ञाने कोऽपराधो वा येन यूयं विषीदथ ॥७॥
कथ्यते देवभाषा या गीयते याऽखिलैर्जनैः ।
जननी याऽन्यभाषाणां हीनास्तत्पाठकाः कथम् ॥८॥
दारिद्र्यादथ चेद् यूयमेतस्मिन्नार्थिके युगे ।
आत्मानमवमन्यध्वे लज्जध्वे वाऽथ विस्मयथ ॥९॥
परन्त्वेषाऽपि वो बुद्धियुक्ता भाति न मे यतः —
स्वीकृतं यत् स्वयं कष्टं तत्र का परिदेवना ॥१०॥
इदं तु खलु दारिद्र्यं भवतामेव पूर्वजैः ।
निधानमिव भूतीनां स्वेच्छयैवोररीकृतम् ॥११॥
क्षत्रियेभ्यो भुवं दत्वा वैश्येभ्यश्चाथ सम्पदः ।
शूद्रेभ्यः शिल्पसेवादि स्वयं जातास्तपस्विनः ॥१२॥
निवृत्ता लोकवृत्तेभ्यः सुखसंभोगनिस्पृहाः ।
विद्याभ्यासरता भूत्वा तपस्तीव्रं वितेनिरे ॥१३॥
ज्ञानविज्ञानचर्चायामन्तरायभयाद् द्विजैः ।
भौतिक्यः सम्पदः सर्वा आगता अप्युपेक्षिताः ॥१४॥
प्रार्थिता अपि विद्वांसो भूयो भूयो नरेश्वरैः ।
नस्वीचक्रुर्धनं किञ्चिद् बहवो निर्धना अपि ॥१५॥

केवलं न च विद्वांसस्तेषां प्रायोऽङ्गना अपि ।
पत्युः प्रज्ञाभिवृद्ध्यर्थं जाता भोगेषु निस्पृहाः ॥१६॥ *
विद्या ब्राह्मणमागत्य ययाचे निजरक्षणम् । †
ब्राह्मणैश्च वचस्तस्या गृहीतं परमादरात् ॥१७॥
तदिदं व्रतमारम्भाद् बहुकालावधिं द्विजैः ।
नानाकष्टानि सोढ्वापि दाढर्येन परिपालितम् ॥१८॥
ब्राह्मणेन तु निष्कामं षडङ्गाः श्रुतयोऽखिलाः ।
धर्मश्चाध्येय इत्येवं स्वधर्मः खलु निश्चितः ॥१९॥ §
अहो निस्पृहता तेषां कीदृशी यत् स्वयं नु तैः ।
कुम्भीधान्यत्वमुद्दिष्टं शिष्टब्राह्मणलक्षणम् ॥२०॥ $
वेद एव परं वित्तं गायत्री देवता परा ।
ज्ञानमेव परं साध्यं ब्राह्मणानामभूत् पुरा ॥२१॥
भग्ना भित्तिश्छदिः शीर्णा समिधो गोमयाः कुशाः ।
मन्त्रिणामपि विप्राणां गृहस्यासन् विभूतयः ॥२२॥ £

---

* यथा नवद्वीपवासिनः श्रीरामनाथ तर्कसिद्धान्तस्य पत्नी ।
(नवद्वीपमहिमा पृ० ३१३)
यथा च दार्शनिकशिरोमणेः श्रीवाचस्पतिमिश्रस्य पत्नी भामती ।

† विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायाऽनृजवेऽयताय मा मा ब्रूया वीर्यवती तथा स्याम् ॥
निरुक्तम्

§ ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च ।
महाभाष्यम्

$ एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा ऊह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारगास्तत्रभवन्तः शिष्टाः ।
महाभाष्यम् ६, ३, १०९

£ यथा आर्यचाणक्यस्य गृहवर्णनम्—
उपलशकलमेतद् भेदकं गोमयानां
बटुभिरुपहृतानां बर्हिषां स्तोम एषः ।
(अग्रेऽपि)

अधार्मिकाणां हसानां दुष्टानां धनिनां गृहे ।
धनार्थं विदुषा क्वापि नहि हस्तौ प्रसारितौ ॥२५॥*
अधुनाऽपि गताब्देषु नवद्वीपादिवासिभिः ।
पण्डितैर्विहितस्त्यागः कस्य नो विस्मयावहः ॥२४॥
तेषां तमद्भुतं त्यागं दृष्ट्वा श्रुत्वा द्विजन्मनाम् ।
न केषां भारतीयानां शिरो गौरवमावहेत् ॥२५॥
तेषां त्यागादिना मुग्धैर्देश्यैर्वैदेशिकैस्तथा ।
विविधेषु निबन्धेषु प्रशंसा महती कृता ॥२६॥†

---

शरणमपि समिद्भिः शुष्यमाणाभिराभि—
विनमितपटलान्तं दृश्यते शीर्णकुड्यम् ॥
मुद्राराक्षसम् — ३—१५

* यथाह वेदान्तदेशिकाचार्यः —

ज्वलतु जलधिक्रोडक्रीडत्कृपीटभवप्रभा—
प्रतिभटपटुज्वालामालाकुलोजठरानलः ।
तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका—
परिमलमुचा वाचा याचामहे न दुरीश्वरान् ॥
वैराग्यपञ्चकम्

† प्राचीनविदुषां त्यागविषये निम्नांकिता ग्रन्था अवलोकनीयाः—

१—नवद्वीप महिमा [ वंगीयविदुषां विशेतश्च नवद्वीपवासिनां वैशिष्ट्य परिचायको वंगभाषामयः ग्रन्थः, लेखकः श्री कान्तिचन्द्र राढ़ी ]

२—संस्कृत विद्याचे पुनरुज्जीवन [ दाक्षिणात्यविदुषां वैशिष्ट्यपरिचायको मराठीभाषाया ग्रन्थः । अस्मिन् ग्रन्थे अन्येपि अनेके ज्ञातव्यविषयाः चर्चिताः सन्तिः । लेखका अस्य श्री नरसिंह चिन्तामणि केलकर महोदयाः ]

३—श्री रामलोचनशरण विहारी अभिनन्दन ग्रन्थ [ अत्र मैथिलविदुषां वैशिष्ट्य बोधका लेखा द्रष्टव्याः ]

४—संस्कृत साहित्यम् [ राजराजवर्म्म राजा-विरचितं मलयालमभाषायाः पुस्तकमिदम् । अत्र केरलीय विद्वद्विषयको लेखः केरलीयविदुषां सम्बन्धे द्रष्टव्यः ]

(अग्रेऽपि)

अस्मिन्नर्थप्रधानेऽपि युगे भारतभूतले ।
तादृशास्त्यागिनो धन्या विद्वांसो नैव दुर्लभाः । २७॥
पश्यन्तु कविराजं तं गोपीनाथं महामतिम् ।
येन लक्ष्मीः स्वयं विद्योपासनायै विवर्जिता ॥२८॥
सच धन्यो महामान्यस्त्यागमूर्तिर् "महाशयः" ।
यस्य निस्पृहता विद्वत्समाजे सर्वविश्रुता ॥२९॥
अहो पश्यत तं दिव्यं काशीनाथं महाकविम् ।
यस्याऽपूर्वं मनस्वित्वं परां काष्ठामुपागतम् ॥३०॥
येनाऽभावशतैः शश्वत् पीडितेनापि भीषणैः ।
प्रार्थितेनापि चाऽनेकैर्नहि याञ्चा कृता क्वचित् ॥३१॥
यदा तु सर्वमेवैतम् इतिहासं द्विजन्मनाम् ।
चिन्तयामि तदा नेत्रे भवतो वारिविप्लुते ॥
अथैवं स्वेच्छयैवेयं वृता निर्धनता यदि ।
ब्राह्मणैर्लोकसेवायै तदा दैन्यं किमर्थकम् ॥३२॥
अनेनैव तु वृत्तेन सर्वलोकातिशायिना ।
भवतां नाम जातीनामितिहासेऽजराऽमरम् ॥३३॥
तदा किमिति सामान्यैर्निर्धनैरिव पण्डितैः ।
मत्वा निर्धनमात्मानं दैन्यमेवं प्रदर्श्यते ॥३४॥
अथ चेदधुना पूर्वव्यवस्थाया अभावतः ।
माहार्घ्येण च दारिद्र्यं सञ्जातं कष्टकारकम् ॥३५॥—
तदा संघटनं कृत्वा प्रयतन्तां तथा दृढं ।
यथा जायेत भवतामपि सौख्यप्रदा स्थितिः ॥३६॥
परन्तु संस्कृताधीतेर्दारिद्र्यादथवा पुनः ।
हीनोऽस्मीति मतिस्तूर्णं हृदयादपसार्यताम् ॥३७॥

---

५ Contribution of kerala to sanskrit literture [ श्रीकुन्जुनीराजा लिखितः केरलीयविद्वद्विषयको महत्त्वपूर्णो ग्रन्थः ]

६—Pandits and Elephants ( पण्डित और हाथी ) By lord laytton पृ० १२८—१३० ।

अथ संस्कृतभाषाया गौरवं कोऽपि शिक्षितः ।
भारतीयो न मन्येत तज्ज्ञानुपहसेत्तथा ॥३८॥
अज्ञानमेव तत्तस्य मन्तव्यं केवलं तदा ।
दयनीयः स च प्रीत्या बोधनीयश्च पण्डितैः ॥३९॥
अथ चेद् भवतां केचिद् गौरवाऽनवधारणात् ।
भवन्मूल्यं न मन्यन्ते हसा उपहसन्ति च ॥४०॥
तथापि भवतां चिन्ता तत्कृता नैव शोभते ।
यन्महत्त्वं न यो वेत्ति श्रद्दधीत स तत् कथम् ॥४१॥
यो राष्ट्रस्य निधिं रक्षेद् यश्च स्वमुदरं भरेत् ।
उभयोः कतरः श्रेयान् इति नास्ति तिरोहितम् ॥४२॥
यदान्यैरर्थलाभाय स्वजातिरपि दूषिता ।
तदा कष्टेन विद्यानां रक्षणं ब्राह्मणैः कृतम् ॥४३॥
अथ मत्सरिणः केचिद् ब्राह्मणानाक्षिपन्ति चेत् ।
दारिद्र्ययोपहासं वा तेषां यदि वितन्वते ॥४४॥
तदा भवद्भिर्निर्भीकैः शास्त्रयुक्तिपुरस्सरम् ।
तेभ्यस्तथोत्तरं देयं यथा स्यान्मुखमुद्रणम् ॥४५॥
वीरः कालीप्रसादोऽसौ नलिनीरञ्जनस्तथा ।
शर्म्मा कपिलदेवश्च चक्रदेवस्तथा सुधीः ॥४६॥
श्रीरामबालकः शास्त्री वाजपेयी महोदयः ।
स्वामी ऋषिकुमारश्च सोमयाजी महाशयः ॥४७॥
शास्त्री विद्याधरः पूर्णप्रसादो ब्राह्मणस्तथा ।
विद्वान् प्रकाशचन्द्रश्च वर्णेकरमहाशयः ॥४८॥
यथैते निर्भया भूत्वा सर्वेषां पुरतः सदा ।
उत्तरं ददते प्रौढं तथा सर्वैर्विधीयताम् ॥४९॥*

---

* एतेषां मनोरञ्जनानि दुर्जनमुखभञ्जनानि च वक्तव्यानि एतेषां पुस्तकेषु लेखेषु च अवलोकनीयानि ।

भारतीयनिधेरस्या भाषाया रक्षणं कृतम् ।
यथा वः पूर्वजैस्तस्य तुलना नैव विद्यते ॥५०॥ ❀
अद्यापि बहुविद्वांस इदं संस्कृतवाङ्मयम् ।
पूज्यं राष्ट्रधनं मत्वा सन्ति तद्रक्षणे पराः ॥५१॥
यो नैतान् बहु मन्येत यश्चैतानाक्षिपेत्तथा ।
ततो मूर्खः कृतघ्नो वा कोऽन्यस्त्रिभुवने भवेत् ॥५२॥
अथवा संस्कृताधीतिं वैज्ञानिकयुगेऽधुना ।
मत्वा व्यर्थां भवन्तश्चेदन्तस्तापेन पीडिताः ॥५३॥
मतिरेषाऽपि युष्माकं महाविस्मयकारिणी ।
बुद्धिमान् को नु मन्येत संस्कृताध्ययनं वृथा ॥५४॥
यथा हिमाद्रिरुत्तुङ्गो गंभीरः सागरो यथा ।
यथा वा व्यापकं व्योम संस्कृतं सार्थकं तथा ॥५५॥
शीतत्वख्यापनं मन्ये मध्याह्ने तपतो रवेः ।
यदेतत् कथनं नाम संस्कृताध्ययनं वृथा ॥५६॥
दिशः संकुचिताः स्युश्चेदमृतं गरलं भवेत् ।
तदापि सुरभाषाया वैयर्थ्यं नैव सम्भवम् ॥५७॥ †

---

❀ अस्मिन् विषये कार्यालयतः प्रकाश्यमाने "ब्राह्मण, देश और विदेश के विद्वानों की दृष्टि में" इति पुस्तके ब्राह्मणानां महत्त्वविषये महात्मा गान्धी, स्वामी विवेकानन्द, रवीन्द्रनाथ ठाकुर प्रभृतीनां तथा बहूनां वैदेशिकानाञ्च विचाराः पठनीयाः ।

† संस्कृतशिक्षायाः सार्थक्यविषये निम्नलिखितानि पुस्तकानि द्रष्टव्यानि—
१—Report of the Sanskrit Commission ( संस्कृतायोगविवरणम् ) पृ० ६६—९१
२—वाराणसेयसंस्कृतविश्वविद्यालयस्य प्रथमोपकुलपतिभिः श्रीमदादित्यनाथझामहोदयैर्विहितानां संस्कृतसम्बन्धिभाषणानां संग्रहः ।
३—संस्कृतगौरवगानम् ( कार्यालयद्वारा प्रकाशितं संस्कृतोपयोगितासम्बन्धे हिन्दीकवितामयं पुस्तकम् ) ।
४—संस्कृत सम्बन्धिनां भाषणानां लेखानां च संग्रहः ( कार्यालयद्वारा अचिरादेव प्रकाशयिष्यमाणः )

(अग्रेऽपि)

मन्ये विज्ञानमधुना चरमामुन्नतिं गतम् ।
महोपकारकञ्चेदं मन्ये मानवजीवने ॥५८॥
परं विज्ञानमात्रेण केवलं नहि मानवः ।
शक्तो मानवतां प्राप्तुं जीवितुं वा महीतले ॥५९॥
अत एवाऽधुना सर्वे देश्या वैदेशिकास्तथा ।
विचारका न मन्यन्ते विज्ञानं केवलं हितम् ॥६०॥†
धर्मोऽध्यात्मं सदाचारो रीतयो नीतयस्तथा ।
दर्शनञ्चेतिहासश्च काव्यं साहित्यमेव च ॥६१॥
सङ्गीतं नाटकं नृत्यं वैद्यकं विविधाः कलाः ।
अर्थशास्त्रं कामशास्त्रं मोक्षशास्त्रं तथैव च ॥६२॥
सामुद्रिकं ज्यौतिषं च तन्त्रं मन्त्रादिकं तथा ।
शिक्षा व्याकरणं छन्दो भाषाविज्ञानमेव च ॥६३॥
इमा अप्यपरा विद्या बह्वयः सन्ति महीतले ।
नराणां जीवने तेषां विकासे च सहायिकाः ॥६४॥
सर्वासामपि चैतासां विद्यानां सहयोगतः ।
प्राप्नोति परमोत्कर्षं संस्कृतिः सभ्यता तथा ॥६५॥
अथेमा यदि विद्यन्ते विद्याः संस्कृतवाङ्मये ।
संस्कृताध्ययनं व्यर्थं तदा मन्येत वा कथम् ॥६६॥
पर्वोत्सवौ समारम्भा विविधा धार्मिकास्तथा ।
एतेऽप्यावश्यका नूनं ज्ञेया जातीयजीवने ॥६७॥
तदेषामपि सर्वेषां कर्मणां हितकारिणाम् ।
संसिद्धिः संस्कृतेनैव भारतेऽद्यापि जायते ॥६८॥

---

५—अमरभारती (आन्ध्रभाषायां संस्कृतमहत्वसूचकं कवितामयं पुस्तकम् ) ।
६—संस्कृत-संस्कृति का विश्व सन्देश श्री प्रो० विद्याधर शास्त्री, बीकानेर ।

† एतद्विषये परिज्ञानाय डा० सर्वपल्ली राधाकृष्णन्, पं० जवाहरलालनेहरू, के० एम० मुंशी, रवीन्द्रनाथ ठाकुर, स्वामी विवेकानन्द, हनुमान प्रसाद पोद्दार, सी० वी० रमणप्रभृतीनां लेखा अवलोकनीयाः ।

भावनाऽनुभवः स्वाभिमानो राष्ट्रीयता तथा ।
मनुष्यता पञ्चशीलं विश्वबन्धुत्वमेव च ॥६९॥
एतेऽपि निखिला भावाः संस्कृतस्यानुशीलनात् ।
यथा पुष्टिं समायान्ति न तथाऽन्येन केनचित् ॥७०॥
अथ चेत् संस्कृताधीतिर्नष्टा स्यादद्य देशतः ।
कथं सुरक्षिता तिष्ठेद् भारतीया नु संस्कृतिः ॥७१॥
संस्कृतेर्भारतीयाया ज्ञाने वा रक्षणेऽपि वा ।
प्रसादे वापि भाषेयं साधनं सर्वसम्मतम् ॥७२॥
अथ चेद्दीर्घदृष्टीनां विदुषामनुभूतयः ।
भवन्ति हितकारिण्यो मानवानां पदे पदे ॥७३॥
अध्येया तु तदा सर्वैः सुरभाषैव केवलम् ।
नीतीनामनुभूतीनां सूक्तीनाञ्चाद्भुतो निधिः ॥७४॥
अथ वैदेशिकानाञ्चेल्लाभो भवति संस्कृतात् ।
तदा नु भारतीयानां कथं लाभो भवेन्नहि ॥७५॥*

---

भारतीय-भाषासाहित्य-संस्कृतिसम्यतानामध्ययनेन लाभविषये वैदेशिकैर्विद्वद्भिः प्रकटीकृताः सद्विचारा निम्नाङ्कितेभ्यो ग्रन्थेभ्यः पठनीयाः —

The wonder, that was India (By A.L. Basham)
India, what can it teach us (By Max Mnller)
The Hidden teaching Beyond yoga (By Paut Brunton)
Yoga vasistha and Modern thought (By B.L. Atreya)
Hindu glory (शास्त्रधर्म प्रचार सभा, कलकत्ता)
Indian Inheritence (भारतीय विद्या भवन, मुम्बई)
कल्याण—हिन्दू संस्कृति अङ्क, गीता प्रेस गोरखपुर
भारतस्य सांस्कृतिकनिधिः डा० रामजी उपाध्याय, सागर विश्वविद्यालयः
जगद्गुरु भारतवर्ष
अन्ये च वैदेशिकैर्लिखिताः संस्कृतसाहित्येतिहासग्रन्थाः ।

प्राप्ता चोपनिषत्पाठैः शान्तिर्वैदेशिकैर्यदि ।
भारतीयैस्तदा सेयं कथं लब्धुं न शक्यते ॥७६॥
अथ सेक्सपियर-शैली-मिल्टन प्रभृतिनिर्मितैः ।
यदि काव्यादिभिः कश्चिल्लाभः पुंसां प्रजायते ॥७७॥
तदा स एव लाभोऽत्र भारतीयैर्मनोहरैः ।
काव्यैर्वा नाटकैर्वापि कथं लब्धुं न शक्यते ॥७८॥
यदि शर्मण्यदेशीयो गेटेनामा महाकविः ।
निमज्जति मुदम्भोधौ अवलोक्य शकुन्तलाम् ॥७९॥
तदा भारतदेशीयैः कालिदासकुलोद्भवैः ।
स्वल्पोऽपि किमु नानन्दः संप्राप्तुं शक्यते ततः ॥८०॥
गीतगोविन्दगीतेन आर्नोल्डो यदि मुह्यति ।
तदा किं न भवेन्मोदो भारतीयजनेष्वहो ॥८१॥
अथ पाणिनिसूत्राणां निरुक्तस्य च शीलनात् ।
यदि वैदेशिका जाता भाषाशास्त्रस्य पण्डिताः ॥८२॥
तदा भारतदेशीयास्तत्तद्भाषाविदो बुधाः ।
कथं लाभाऽन्विता न स्युरुभयोरनुशीलनात् ॥८३॥
लाभो विदेशिनां जातो यदि योगानुशीलनात् ।
तदा तद्भूमिजातानां जनानां न कथं भवेत् ॥८४॥
अथ व्यक्तित्वनिर्माणे तदुत्कर्षे च संस्कृतम् ।
परं साधनमित्येतदपि वैदेशिका जगुः ॥८५॥
तदा किमिति तच्छिष्यम्मन्यैराङ्गलपण्डितैः ।
इहलोकोपयोगित्वं संस्कृतस्य न मन्यते ॥८६॥
सुलभाः संस्कृताधीतेरेवं लाभा अनेकशः ।
तत् कथं ननु मन्तव्यं ज्ञानमस्य निरर्थकम् ॥८७॥
अथ संस्कृतविद्येयं विज्ञानं विरुणद्धि नो ।
आदौ तु संस्कृतादेव विज्ञानमुदपद्यत ॥८८॥

त्रिस्कन्धं ज्यौतिषं चायुर्वेदोऽप्यष्टाङ्ग एव च ।
नानाविषयसम्बद्धाः शिल्पग्रन्था अनेकशः ॥८९॥※
नौकारथास्त्रशस्त्रादिरचना वस्त्रनिर्मितिः ।
प्रासादनगरीरथ्यानिर्माणादिकला अपि ॥९०॥
खनिविद्या धातुविद्या रत्नविद्या दगार्गलम् ।
पशूनां पक्षिणां विद्या विषविद्या रसायनम् ॥९१॥
कृषिविद्या च वाणिज्यं रङ्गविद्या च चित्रणम् ।
क्रीडा बहुविधा रम्याश्चतुरङ्गादयस्तथा ॥९२॥
एवं बहुविधा विद्या भौतिक्योऽप्यभवन् पुरा ।†
तासां देशे प्रयोगश्च सर्वासामप्यजायत ॥९३॥

---

※ अवलोक्यतां श्रीगोविन्दगजाननजोशीमहोदयैः प्रकाशितो निखिलशिल्प-कलाग्रन्थनिरूपणात्मको लेखसमुच्चयः । प्राप्तिस्थानम्—पी० डब्ल्यू० डी० सेक्रेटरियेट, नागपुरम् । अयं लेखसमुच्चयो दशभी रूप्यकैर्लभ्यते । अवश्यमेव जिज्ञासुविद्वज्जनैरवलोकनीयः ।

† विषयेऽस्मिन्नधस्तना ग्रन्था अवलोकनीयाः—

१—वैज्ञानिक विकासकी भारतीय परम्परा (ले० डा० सत्यप्रकाश)
२—Positive sciences of the Hindus ( by Brajendra nath seal ).
३—Hindu Chemistry ( by Prafull chandra Roy ).
४—गोवर्द्धनपीठाधीश्वर-श्रीभारतीकृष्णतीर्थमहोदयानां संस्कृतरत्नाकरस्य वेदाङ्के प्रकाशितः कवितामयो महानिबन्धः ।
५—the Positive Back ground of Hindu Sociology Book. I, II. ( Two Parts )
६—इन्द्रविजयः (भारतवर्षीयार्योपाख्यानम्) श्रीमधुसूदनशर्म्मझामहोदयैः प्रणीतः सर्वैरपि पण्डितैः सर्वथाऽवलोकनीयश्च ।
७—प्राचीनभारते उद्भिद्विद्या ( वंगला ) शान्तिनिकेतन ।
८—भारतीय ज्योतिष का इतिहास. डा० गोरखप्रसाद तथा दीक्षित ।
९—हिन्दुत्व. श्रीरामदास गौड़ ।
१०—Hindu glory. शास्त्रधर्मप्रचारसभा चौरंगी, कलकत्ता ।
११—प्राचीन भारत के कलात्मक विनोद । डा० हजारीप्रसाद द्विवेदी ।

अद्यापि भारतेऽपूर्वं स्थापत्यं यद्विलोक्यते ।
तत् किं सर्वं विदेशीयैः शिल्पाचार्यैर्विनिर्मितम् ।।६४।।
ततोऽधिकन्तु यत्किञ्चिद् विज्ञानं वर्द्धतेऽधुना ।
तस्य सर्वस्य सुप्रीत्या कुर्मः सुस्वागतं भृशम् ।।६५।।
परं तेनैव कल्याणं सम्पूर्णं भविता भुवः ।
व्यर्था विद्याः पराः सर्वा नैतन्मन्यामहे वयम् ।।६६।।
परलोकप्रधानेयं विद्या तत्रैव सौख्यदा ।
ऐहलौकिक उत्कर्षः सुलभो नाऽनया क्वचित् ।।९७।।
इत्येवं ये जनाः केचिदाक्षिपन्तीह संस्कृतम् ।
तैर्यथार्थतया ज्ञातं नैतत् कात्स्न्र्येन वाङ्मयम् ।।९८।।
धर्मार्थकाममोक्षाख्याः पुरुषार्थाश्चतुर्विधाः ।
एते सर्वेऽपि साम्येन सम्पाद्या अत्र वर्णिताः ।।९९।।
यथा योगस्तथा भोगो यथा धर्मस्तथा धनम् ।
त्यागश्च संग्रहश्चापि सर्वमत्र प्रतिष्ठितम् ।।१००।।
प्रासादश्च कुटीरं च कौपीनं शाटिका तथा ।
कुशासनं तूलिका च उपवासः सुभोजनम् ।।१०१।।
मैत्री वैरं, रणः शान्तिर्, दैन्यं मानो, रतिर्दमः ।
देशकालौ तथा पात्रं दृष्ट्वा सर्वं नियोजितम् ।।१०२।।
न तत् सुखं न तच्छ्रेयो न वानन्दः स भौतिकः ।
यः स्वीकृतो न वो विज्ञैः पूर्वजैरार्यसंस्कृतौ ।।१०३।।
यत् किञ्चिद् दूषितं पूर्वैर्वर्जितं वा विगर्हितम् ।
असंयमोऽविवेकश्च द्वयमेव न चाऽपरम् ।।१०४।।
अथांग्लभाषाविद्वांसः पाश्चात्याचारवर्जनात् ।
मत्वा प्रगतिहीनान् वो हसन्ति यदि केचन ।।१०५।।
तदा भवद्भिरप्येषां सप्रमाणं सयुक्तिकम् ।
सर्वेऽप्याचारगा दोषा उद्घुष्यन्ते कथं नहि ।।१०६।।
पाश्चात्यसभ्यतैवैका प्रगतेः परिचायिका ।
नैतत् साधयितुं शक्यं पाश्चात्यैः सकलैरपि ।।१०७।।

१०

अन्धानुकरणस्यैतत् फलं भारतवासिनाम् ।
यदेते पश्चिमाचारैर्मन्यन्ते प्रगतिं पराम् ॥१०८॥
धूमपानं सुरापानं नग्नस्नानं तथैव च ।
आहारे च विहारे च परा संयमहीनता ॥१०९॥
चाकचिक्यमया वेषा आडम्बरमयी स्थितिः ।
परानुकरणे प्रीतिः स्ववस्तूनामनादरः ॥११०॥
एभिरेव गुणैर्नृणां प्रगतिर्जायते किमु ।
मन्यध्वे यर्विना यूयं प्रगतेः परिपन्थिनः ? ॥१११॥
वस्तुतः पश्चिमीयानामाचाराणां परीक्षणात् ।
तेषां गुणास्तथा दोषा विज्ञायन्ते यथार्थतः ॥११२॥*
अतो भवद्भिः स्वीयानामाचाराणां वरिष्ठता ।
साधनीया तथा स्थेयं सततं स्वाभिमानिभिः ॥११३॥
अतः संस्कृतभाषाया विद्याया अपि वा बुधाः ।
न कोऽपि तादृशो दोषो यथेयं निन्दिता भवेत् ॥११४॥
अत एव तु देशस्य सर्वे मुख्या विचारकाः ।
स्पष्टं संस्कृतभाषाया रक्षामावश्यकीं विदुः ॥११५॥†
अहो संस्कृतभाषायास्तज्ज्ञानां विदुषां तथा ।
महत्त्वं को विना मूढान्न स्वीकुर्यात् सचेतनः ॥११६॥

---

* अस्मिन् विषये स्वर्गीयशालिग्रामशास्त्रिणां "पाश्चात्यसभ्यता" नामकः कवितामयो निबन्धोऽपि नितरां मनोरमः ।

अस्मिन् विषये श्रीनरदेवशास्त्रिणां "संस्कृतके पण्डित और अंग्रेजीके विद्वान्" इति लेखो नूनमवलोकनीयः । कल्याण, अक्टूबर, १९५१ । तथैव "शान्तिनिकेतने ब्रह्मचर्याश्रम" इति नामकं रवीन्द्रनाथठाकुरस्य वंगभाषामयं पुस्तकञ्च अवश्यं पठनीयम् ।

† अवलोक्यतां "संस्कृतशिक्षा के सम्बन्ध में सुप्रसिद्ध नेताओं तथा विद्वानों के विचार" इति नामकं सार्वभौम संस्कृत प्रचार कार्यालयतः प्रकाशितं पुस्तकं तथा संस्कृतायोगविवरणं ( Report of Sanskrit Commission ) च ।

अथ ये केऽपि लभ्यन्ते दोषाः पण्डितमण्डले।
वर्णिता वा मया येऽपि केचित् कटुकया गिरा ॥११७॥
तेनाऽपि भवतां हीनभावना नहि शोभते।
अन्येष्वपि समाजेषु लभ्यन्ते दुर्गुणा न किम् ॥११८॥
भवतां तु यथा भूयात् निर्दोषा सर्वथा स्थितिः।
सर्वोत्कृष्टं यशश्चेति मया सर्वं निवेदितम् ॥११९॥
सारल्यञ्च सदाचारः शुचित्वं पापभीरुता।
शास्त्ररक्षणनिष्ठा च ईदृशी क्व नु लभ्यते ॥२०॥
मम त्वेतदहो कष्टं यद् भवन्तः स्वगौरवम्।
स्वयमेव न जानन्ति नात्मानं विश्वसन्ति च ॥१२१॥
अतोऽस्याः खलु भाषाया विद्यानां विदुषां तथा।
ज्ञात्वा पूर्णतया सर्वमितिहासं पुरातनम् ॥१२२॥—
महत्त्वञ्चापि विज्ञाय लाभं तात्कालिकं तथा।
दैन्यमुत्सृज्यतां तूर्णं हृष्टचित्ता भवन्तु च ॥१२३॥
आत्मनो गौरवं ध्यात्वा तथा राष्ट्रोपकारिताम्।
पूर्णविश्वाससम्पन्ना जायन्तां स्वाभिमानिनः ॥१२४॥

विस्मृत्या निजयशसो दिगन्तदीप्ते—
रुद्भूतं खलु मनसो विनीय दैन्यम्।
विद्वांसः खरतरतेजसा ज्वलन्तो
निर्भीका विचरत सर्वतः समाजे ॥१२५॥

## द्वादशः सन्देशः

( वाराणसेयसंस्कृतविश्वविद्यालयस्य सर्वाङ्गपूर्णतां
सर्वावयवानवद्यताञ्च उद्दिश्य )

अथ संस्कृतशिक्षायाः पीठे वाराणसीपुरे।
विश्वविद्यालयो योऽयं नवीनः स्थापितोऽधुना ॥१॥
तस्यापि खलु शिक्षाया व्यवस्थायास्तथा स्थितिम्।
मनोऽनुकूलां न दृष्ट्वा किञ्चित् कष्टं प्रजायते ॥२॥

इदन्तु परमं मन्ये सौभाग्यमहमात्मनः ।
यदयं स्थापितो भव्यो विश्वविद्यालयो नवः ॥३॥
धन्यः स तु महावीरः सम्पूर्णानन्द एकलः ।
येनेदं साहसं कृत्वा महत्कार्यमनुष्ठितम् ॥४॥
स च मे धन्यवादार्हो गङ्गानाथात्मजः कृती ।
विशालहृदयो धीमान् श्रीमानादित्यनाथझाः ॥५॥
येन स्वाप्रतिमप्रज्ञोत्साहशक्तिश्रमादिभिः ।
सौजन्येन च संस्थेयं नीता शीघ्रं समुन्नतिम् ॥६॥
वृद्धायामपि संस्थायामेतस्यां कालयोगतः ।
चाकचिक्यमयी दिव्या दृश्यतेऽभिनवच्छटा ॥७॥
गोपुराणि सुरम्याणि प्राकारश्चातिशोभनः ।
भवनानि विशालानि विचित्राणि वराणि च ॥८॥
कार्यालया अनेके च उद्यानञ्चातिशोभनम् ।
यज्ञशाला सुरुचिरा छात्रावासो मनोहरः ॥९॥
चिकित्सासदनं नाट्यशालाऽतिथिगृहन्तथा ।
वेदविद्यालयः शिक्षाशास्त्रविद्यालयस्तथा ॥१०॥
अनुसन्धानशाला च विशालः पुस्तकालयः ।
ग्रन्थानां पत्रिकायाश्च मनोहारि प्रकाशनम् ॥११॥
अन्ताराष्ट्रीयमत्यन्तोत्कृष्टं विद्यानिकेतनम् ।
तस्य छात्रालयश्चापि विभक्तोऽस्ति मनोहरः ॥१२॥
कोरिया-चीन-जापान-श्याम-सिंहलभूमिभिः ।
विद्यार्थिनामागतानां समवायो मनोहरः ॥१३॥
आचार्याश्चापि भूयांसो नानाशास्त्रविशारदाः ।
शुक्लास्तेषां कृते मृद्व्यो गर्दिकाश्चोपधानिकाः ॥१४॥
सर्वेषामपि शास्त्राणामध्यापनमनुत्तमम् ।
नव्यानामपि सर्वेषां विषयाणां सुशिक्षणम् ॥१५॥
वेतनञ्चापि सर्वेषां पर्याप्तं तोषदायकम् ।
कार्यसम्पादने चापि प्रवीणा अधिकारिणः ॥१६॥

साधनानि च सर्वाणि असंख्याः कर्मचारिणः ।
द्रष्टुश्चेतोहराऽपूर्वा सर्वत्र रमणीयता ॥१७॥
एतदादिकमालोक्य सर्वं दृश्यं मनोहरम् ।
कस्य वा सुधियश्चेतो हर्षोत्फुल्लं न जायते ॥१८॥
परमत्रापि शिक्षाया विषये यादृगुन्नतिः ।
आसीदभीप्सिताऽस्माकं तथा नैवावलोक्यते ॥१९॥
बाह्येष्वङ्गेषु सर्वेषु यथोत्कर्षोऽवलोक्यते ।
तथा कश्चित् समुत्कर्षः शिक्षादिष्वप्यपेक्षितः ॥२०॥
मन्ये कृती कुलपतिस्तथान्ये चाधिकारिणः ।
अचिरादेव कुर्वीरन् समीचीनां व्यवस्थितिम् ॥२१॥
शुश्रूषया श्रवणतो ग्रहणाद् धारणादपि ।
ऊहाऽपोहादिभिश्च स्यात् शिक्षा सर्वगुणान्विता ॥२२॥
एतस्मिन्नूतने विश्वविद्यापीठेऽतिविश्रुते ।
आशाकेन्द्रे च भारत्या भारतीसेविनां तथा ॥२३॥❀—
यतितव्यं तथा दत्वा प्राणानप्यधिकारिभिः ।
यथा पीठमिदं लोके गच्छेदादर्शरूपताम्॥२४॥

तथाहि—

अत्राचार्या नियोक्तव्या आचार्यशतपूजिता ।
निष्णाताः स्वीयशास्त्रेषु आदर्शाचारभूषिताः ॥२५॥
आत्मीयोऽयं सतीर्थ्योऽयं सजातीयोऽथवा मम ।
अनेन महती सेवा कृता मे चाऽप्युपासना ॥२६॥

---

❀ यथा आशासितं सन्देशवाहकेन—

हे हे संस्कृतभारति प्रियतमे वन्द्यानि शास्त्राणि नः
भो भो दैन्यविपन्नपण्डितवराश्छात्राश्च चिन्तान्विताः ।
धैर्यं धारयत क्षणं सुरगिरोऽयं विश्वविद्यालयः
सर्वक्लेशनिवारणाय भवतां यावत् समुज्जृम्भते ॥

इति मत्वाऽधिकारस्थैरयोग्यानधिकारिणाम् ।
न प्रवादकरी कार्या नियुक्तिः कृपया क्वचित् ॥२७॥
अस्मिन् संस्कृतविद्याया मन्दिरे विश्ववन्दिते ।
नहि मूर्तिः प्रतिष्ठाप्या काचिन्माहात्म्यवर्जिता ॥२८॥
रूपयौवनसम्पन्ना विशालकुलजा अपि ।
स्वल्पविद्या न वै ग्राह्याः सङ्कोचादथवा भयात् ॥२९॥
अस्मिन् दिव्ये सरस्वत्या लीलोद्याने मनोरमे ।
किंशुका इव निर्गन्धा रोपणीया न वै सुमाः ॥३०॥
भारतीयार्यविद्याया एतन्निर्मलमम्बरम् ।
चन्द्रसूर्योपमैः प्राज्ञैराकल्पान्तं प्रकाशताम् ॥३१॥
आचार्यैरपि लब्ध्वाऽस्मिन् स्थाने सम्मानितं पदम् ।
रक्षणीया प्रतिष्ठा सा वैदुष्येनातिशायिना ॥३२॥
विश्वविद्यालये गत्वा स्थित्वा वा भवने बुधैः ।
स्वाध्यायाभ्यसनेष्वेव नेतव्याः सकलाः कलाः ॥३३॥
विगताब्देष्विहस्थानां विख्यातानां मनीषिणाम् ।
न कथाशेषतां नेयं वैदुष्यं लोकविश्रुतम् ॥३४॥
पर्याप्तवेतनप्राप्त्या गृहचिन्ताविवर्जिताः ।
शास्त्रावगाहने मग्ना विद्वांसः सन्तु साम्प्रतम् ॥३५॥
अधुना खलु लब्धे तु सौविध्ये निखिले बुधैः ।
आसक्तिरन्यकार्येषु महती स्यात् कृतघ्नता ॥३६॥
अध्याप्याः सुचिरं छात्राः कृत्वा पूर्णं परिश्रमम् ।
लेखनीयास्तथा लेखा ग्रन्थाश्चाप्युत्तमोत्तमाः ॥३७॥
ग्रन्थानां संग्रहो भूयान् रक्षणीयो निजे गृहे ।
सकलाश्चान्यभाषीया ज्ञेया आलोचना नवाः ॥३८॥
प्रत्ने नव्येऽपि सिद्धान्ते विज्ञातान्ता विपश्चितः ।
देहलीदीपतुल्याः स्युरुभयत्र प्रकाशकाः ॥३९॥
रामावतारसदृशाः सुधाकरसमास्तथा ।
गणनाथसमाश्चापि गोपीनाथोपमा अपि ॥४०॥

मधुसूदनझातुल्या भवेयुर्विबुधा यदि ।
तदैवाऽस्य यशः, शोभा, प्रतिष्ठा, चरितार्थता ॥४१॥
अथ वृत्तिर्बुधैर्लब्धा पर्याप्ता यदि सम्प्रति ।
स्वरूपमपि तद् योग्यं सर्वेषामिष्यते तदा ॥४२॥
आये प्राध्यापकत्वं चेद् ऋषित्वं न व्यये शुभम् ।
उभयोः सङ्गतिः कार्या व्यवहारे मनीषिभिः ॥४३॥
एवञ्चेद् विद्यया वाचा स्वरूपेण च पण्डिताः ।
सम्पन्नाः स्युस्तदा संस्था सुमहद् गौरवं वहेत् ॥४४॥
इदं प्रथमसोपानं विश्वविद्यालयोन्नतेः ।
यदाचार्यः, श्रमी, विद्वान्, व्याख्याता, शिष्यवत्सलः ॥४५॥*
अथेहस्थे सुविख्याते ग्रन्थागारे च तादृशः ।
अध्यक्षः कोऽपि निर्वाच्यो यस्तत्स्थानोचितो भवेत् ॥४६॥
विद्वान् विद्यानुरागी च शील-सौजन्यसागरः ।
पाठकानामुपेतानां सर्वसौविध्यकारकः ॥४७॥
प्रीत्या यो वचनं ब्रूयात् ज्ञेयं सर्वं निवेदयेत् ।
अपि दद्यात् स्वयं ग्रन्थान् गत्वा जिज्ञासवे मुदा ॥४८॥
एवम्विधो यदि भवेदध्यक्षो ग्रन्थमन्दिरे ।
लाभो बहूनां जायेत कीर्तिश्चास्य गरीयसी ॥४९॥

---

* यथा प्राचीनैराचार्यविषये प्रतिपादितम्—
येषां तपःश्रीरनघा शरीरे विवेचिका चेतसि तत्त्वबुद्धिः ।
सरस्वती तिष्ठति वक्त्रपद्मे पुनन्तु तेऽध्यापकपुङ्गवा नः ॥
अमितगतिश्रावकाचारः ।

ततोऽनन्तरमाचार्यं परीक्षेत । तद्यथा—पर्यवदातश्रुतं, परिदृष्टकर्माणं, दक्षं, दक्षिणं, शुचिं, जितहस्तम्, उपकरणवन्तं, सर्वेन्द्रियोपपन्नं, प्रकृतिज्ञं, प्रतिपत्तिज्ञम्, उपस्कृतविद्यम्, अनहङ्कृतम्, अनसूयकम्, अकोपनं, क्लेशक्षमं, शिष्यवत्सलमध्यापकं ज्ञापनसमर्थञ्चेति । एवं गुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति ।
—चरकसंहिता, विमानस्थानम्, अष्टमोऽध्यायः ।
(अग्रेऽपि)

गत्वा गोयन्दकाग्रन्थागारं पश्यन्तु, कीदृशम् ।
तत्र श्रीकृष्णपन्तेन सौविध्यं दीयते मुदा ॥५०॥

अथ विद्यार्थिनोऽपि स्युः सत्यं विद्यार्थिनोऽखिलाः ।
पठने लेखने वादे वक्तृत्वे चोत्तमोत्तमाः ॥५१॥

छात्राणां ये गुणाः प्रोक्ता आदर्शाश्चोत्तमोत्तमाः ।
तेषां सम्पादने दक्षैर्भाव्यं विद्यार्थिभिः सदा ॥५२॥

अत्रागत्य जनाः सर्वे दृष्ट्वा छात्रान् यथोत्तमान् ।
सुप्रीता विस्मिताः स्युस्ते तथा यत्नो विधीयताम् ॥५३॥

छात्राणामल्पताहेतोर्विषीदन्ति विपश्चितः ।
न तु योग्यान् प्रकुर्वन्ति यावन्तः सन्ति तानपि ॥५४॥

अल्पीयांसोऽपि चेच्छात्रा विद्याचारित्रशालिनः ।
तावताऽपि कृतार्थोऽयं विश्वविद्यालयो भवेत् ॥५५॥

अतो विद्यार्थिभिः सर्वैः सर्वैरध्यापकैस्तथा ।
किञ्चिद् वैशिष्ट्यमानेयं महनीयं महीतले ॥५६॥

अस्मिन् स्थाने निवसतोः सकाशाद् गुरुशिष्ययोः ।
स्वं स्वं चरित्रं शिक्षेरन् शिष्या अध्यापका भुवि ॥५७॥

अथेयमपि वाञ्छा मे चिरादेका गरीयसी ।
यथेह कश्चिदादर्शो विशिष्टः स्थापितो भवेत् ॥५८॥

यथा गुरुकुले वापि यथा शान्तिनिकेतने ।
यथा दारुल् उलूमाख्ये अर्बीविद्यालये तथा ॥५९॥—

अपूर्वा दृश्यते काचित् संस्कृतिः स्वविशेषिका ।
तथैवात्रापि संस्कारः कश्चिन्निर्मीयतां नवः ॥६०॥

---

श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥
लब्धास्पदोऽस्मीति विवादभीरोस्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति ॥

मालविकाग्निमित्रम्, १–१६–१७ ।

अधिकारिभिराचार्यैः सम्यक् कृत्वा विचारणाम् ।
विश्वविद्यालयादर्शः कश्चित् संस्थाप्यतां नवः ॥६१॥
"सारल्यं वाऽथ सेवा वा, सौभ्रात्रं, विनयोऽथ वा ।
चारित्र्यं, वाऽथवौदार्यं", दृष्टिकोणे विशालता ॥६२॥
संस्कृतेर्भारतीयाया सम्यग् ज्ञानं, श्रमोऽथवा ।
आदेशपालनं वापि, त्यागो वा संयमोऽपि वा ॥६३॥
अथ कष्टसहिष्णुत्वं, लोकसेवाऽथवा पुनः ।
आस्तिक्यं वा,ऽथवा देशे धर्माचारप्रचारणम्" ॥६४॥
एकः कश्चिदिहादर्शो नूनं संस्थाप्यतां नवः ।
पाल्यतां चातियत्नेन सर्वैरत्र निवासिभिः ॥६५॥
दीक्षान्तस्य समारोहो वर्षान्ते जायते यथा ।
तथैवादौ प्रवेशस्यापि कर्तव्यो महोत्सवः ॥६६॥
तत्रैवादर्शसम्बन्धे कर्तव्यविषये तथा ।
कर्तव्या मार्मिकी चर्चा व्रतग्रहणपूर्वकम् ॥६७॥*

---

* यथा शान्तिनिकेतनस्थे विश्वभारतीविश्वविद्यालये पठ्यते—

"अथेयं विश्वभारती । यत्र विश्वं भवति एकनीडम् । प्रयोजनमस्याः समासतो व्याख्यास्यामः । एष नः प्रत्ययः । सत्यं ह्येकम् । पन्थाः पुनरस्य नैकः । विचित्रैरेव हि पथिभिः पुरुषा नैकदेशवासिन एकं तीर्थमुपासर्पन्ति इति हि विज्ञायते । प्राची प्रतीची चेति द्वे धारे विद्यायाः । द्वाभ्यामप्येताभ्यामुपलब्धव्यमैक्यं सत्यस्याखिललोकाश्रयभूतस्य इति नः संकल्पः ।

एतस्यैवैक्यस्य उपलब्धिः परमो लाभः परमा शान्तिः परमञ्च कल्याणं पुरुषस्य इति हि वयं विजानीमः ।

सेयमुपासनीया नो विश्वभारती विविधदेशप्रथिताभिर्विचित्रविद्याकुसुममालिकाभिरिति हि प्राच्याश्च प्रतीच्याश्चेति सर्वेऽप्युपासकाः सादरमाहूयन्ते । तदिदमनुज्ञायताम्, तदिदमनुमन्यताम्, तदिदमनुष्ठीयताम् ।

इदमस्माभिरनुज्ञायते । इदमस्माभिरनुमन्यते । इदञ्च वयमनुतिष्ठामो यावच्छक्यं यथाज्ञानं च । तदिदमृध्यतां तदिदं समृध्यताम् ।

—विश्वभारतीनियमावलीतः ।

अथ चोपनिषत्प्रोक्तः शान्तिपाठो मनोहरः ।
पाठारम्भे प्रतिदिनं गुरुशिष्यैर्विधीयताम् ॥६८॥

वैदेशिकानां छात्राणां व्यवस्था क्रियतां तथा ।
यथा तेऽध्ययनं कुर्युर्नित्यं शतसहस्रशः ॥६९॥

अथ संस्कृतभाषायाः पठने पाठनेऽपि वा ।
इदानीं विषया ये ये सर्वथा समुपेक्षिताः ॥७०॥*
तेषामपि विशेषज्ञः एकैकोऽपि यथा भवेत् ।
तथा सुनिश्चिता काचित् क्रियतां योजना नवा ॥७१॥

सुशकः प्रकटीकर्तुं को रसः केन छन्दसा ।
पद्यानां च कथं पाठो भवेदति मनोहरः ॥७२॥
एतस्य सम्यगभ्यासं कृत्वा तज्ज्ञैर्मनीषिभिः ।
पद्यपाठविधेः किञ्चिच्छास्त्रं निर्मीयतां नवम् ॥७३॥
गीतानामथ नव्यानां प्रत्नानाञ्चापि संग्रहे ।
कश्चिज्जनो नियोक्तव्यो तद्गाने चापि केचन ॥७४॥
नृत्यानां नाटकानां च भाणानाञ्चापि भूयसाम् ।
मण्डल्यो निपुणाः काश्चिन्निर्मातव्याः पृथक् पृथक् ॥७५॥
इमा देशं विदेशेऽपि ग्रामं ग्रामं निरन्तरम् ।
प्रयोगं सुरभाषाया दर्शयेयुर्नवं नवम् ॥७६॥
योगविद्यालयश्चापि संस्थाप्यो यत्र पण्डितैः ।
ग्रन्थानां च क्रियायाश्च शिक्षा दीयेत शोभना ॥७७॥

---

* वर्तमानसंस्कृतशिक्षणे उपेक्षिता विषयास्तथा ग्रन्थाः—

अर्थशास्त्रम्, नीतिग्रन्थाः, कामशास्त्रम्, संगीतशास्त्रम्, शिल्पशास्त्रम्, सामुद्रिकम्, कलाविषयः; अश्वशास्त्रम्, गजशास्त्रम्, श्यैनिकशास्त्रम्, नाट्यशास्त्रम्, कृषिविद्या, चित्रविद्या, तन्त्रविद्या, इन्द्रजालम्, पाकशास्त्रम्, वार्ताशास्त्रमित्यादयो विषयाः ।

समरांगणसूत्रधारः, युक्तिकल्पतरुः, मानसोल्लासः, बृहत्संहिता, शिवतत्त्वरत्नाकरः, क्षेमेन्द्रकृतयः अग्निपुराणञ्चेत्यादयो ग्रन्थाः ।

विद्यालयः पृथक्कार्यः साधुसंन्यासिनां कृते ।
पाठ्यक्रमस्तथा भिन्नो योगाभ्यासादिसंयुतः ।।७८।।

काव्यादीनामियं शिक्षा शृङ्गारबहुला भृशम् ।
कथं हितकरी मान्या यूनां संन्यासिनां कृते ।।७९।।

कन्याविद्यालयश्चापि दूरे स्थाप्यो विशेषतः ।
स्त्रिय एव नियोक्तव्याः सर्वा अध्यापिकास्तथा ।।८०।।

धर्मसंस्कृतिशिक्षाया व्यवस्था च दृढा भवेत् । ❀
येन सांस्कृतिकं ज्ञानं सर्वेषामुत्तमं भवेत् ।।८१।।

एकस्मिन् समये सर्वे छात्रा अध्यापकास्तथा ।
धर्मसंस्कृतिसम्बन्धे विचारान् शृणुयुः शुभान् ।।८२।।

छात्राणामर्थहीनानां निर्वाहाय च कश्चन ।
सञ्चालनीय उद्योगः सुकरः स्वल्पकालिकः ।।८३।।

अथ संस्कृतभाषायाः प्रचाराय च कश्चन ।
विभागः स्थाप्यतामत्रावश्यमेवाधिकारिभिः ।।८४।।

अस्य प्रचारको गत्वा ग्रामे ग्रामे गृहे गृहे ।
संस्कृतस्य महत्त्वं च शिक्षारीतिं च बोधयेत् ।।८५।।

अथ सामान्यलोकानामपि ज्ञानाय शोभनाः ।
परीक्षाः सरलाः काश्चित् चालनीयाः समन्ततः ।।८६।।

नवसंस्कृतशब्दानां निर्मित्यै संग्रहाय च ।
निर्मेया समितिः काचिद् विदुषामधिकारिणाम् ।।८७।।

भौगोलिकप्रसङ्गानामथ काव्यादिवर्तिनाम् ।
सम्यग् ज्ञानाय कर्तव्या मानचित्रादिनिर्मितिः ।।८८।।

सदाचारास्तथा के के शिष्टाचारास्तथैव च ।
प्राचीना वा नवीना वा पालनीया इहस्थितैः ।।८९।।

---

❀ अस्मिन् विषये "संस्कृत पाठशालाओं में दैनिक धर्मशिक्षा की आवश्यकता और उसकी योजना" इतिनामकं कार्यालयात् प्रकाशितं पुस्तकं द्रष्टव्यम् ।

एका सूची विनिर्मेया तेषामप्यत्र पण्डितैः ।
प्रचारश्चापि कर्तव्यस्तेषामन्यहिताय च ॥९०॥
विश्वविद्यालयस्थाश्च समस्ताः कर्मचारिणः ।
लेखकाः सेवका वापि युवानो बालकास्तथा ॥९१॥
त एवाऽत्र प्रवेष्टव्या ये स्वल्पमपि संस्कृतम् ।
अवश्यमेव जानीतुर्वक्तुं बोद्धुं च शक्नुयुः ॥९२॥
विश्वविद्यालयः सोऽयं तथा कार्योऽधिकारिभिः ।
यथाऽयं देवभाषाया नगरं घोषितो भवेत् ॥९३॥
इहस्था यदि विद्वांस इहस्थैः सकलैः सह ।
वदेयुः संस्कृते शश्वत्तदेदं सुकरं भृशम् ॥९४॥*
इहाऽगच्छ, जलं देहि, इदं पत्रं च कीदृशम् ।
एवं यदि बुधा ब्रूयुर्भृत्यान् तद्दुःखदं नु किम् ॥९५॥
एषां कार्यकलापानां कुर्वीत यदि सिद्धये ।
विश्वविद्यालयो यत्नं तदाऽयं सफलो भवेत् ॥ ९॥
अतो विद्यालयस्यास्य मान्यान् कुलपतीनहम् ।
पूजनीयांस्तथाचार्यान् वरिष्ठांश्चाधिकारिणः ॥९७॥
भूत्वा बद्धाञ्जलिर्भक्त्या भूयो भूयो निवेदये ।
रक्षायै सुरभाषायाः शास्त्राणां संस्कृतेस्तथा ॥९८॥
गौणमात्महितं कृत्वा सेवाभावेन भूयसा ।
आचारेण च संस्थेयं नेतव्याऽभ्युन्नतिं पराम् ॥९९॥

सकलगुणवरिष्ठैर्वर्तमानैरिदानी—
मुपकुलपतिवर्यैर्विश्वविद्यालयोऽयम् ।†
समधिकशुचिसेवाशक्तिभिः सेव्यमानो
भवतु सकलविद्यासाधनासिद्धपीठम् ॥१००॥

---

* दैनिकव्यवहारोपयोगिनां वाक्यानां परिज्ञानाय कार्यालयद्वारा प्रकाशिता वाक्यसूची संग्राह्या व्यवहर्तव्या च ।

† वर्तमानोप कुलपतयः मान्य श्रीपण्डितसुरतिनारायणमणित्रिपाठिमहाभागाः ।

## त्रयोदशः सन्देशः

( विदुषां कृते अन्यान्यपि कानिचिदावश्यकानि कार्याणि उद्दिश्य )

अथ संस्कृतशिक्षायाः, भवतां विदुषां तथा ।
भवद्विद्यार्थिनाञ्चापि स्नातकानां यशस्विनाम् ॥१॥—
यथोचितप्रतिष्ठायै विकासाय हिताय च ।
अन्येषामपि लोकानां कर्तव्यं भूरि विद्यते ॥२॥
अतस्तेऽपि जनाः सर्वे निजकर्तव्यपालने ।
भवद्भिः संहतैर्भूत्वा प्रेरणीया यथाबलम् ॥३॥
यथा हि भवतां केचिद्दोषा मे ह्रासहेतवः ।
तेषामपि तथैवाहं दोषैरुत्पीडिता भृशम् ॥४॥
अतः स्वीयहितं मत्वा पण्डितैरेव संहतैः ।
तेषामप्यखिला दोषाः सूचनीयाः स्वयत्नतः ॥५॥

तथाहि—

हिन्दूनामेव सर्वेषां प्रथमं दृश्यतां दशा ।
प्रधानं निजकर्तव्यं कियदेतैर्नु विस्मृतम् ॥६॥
शिक्षितोऽशिक्षितो वाऽपि प्रत्येकं हिन्दुवंशजः ।
संस्कृतं निजकर्तव्यं मत्वाऽवश्यं पठेद् यदि ॥७॥
संस्कृतस्यापि रक्षा स्यात् संस्कृतेश्चापि रक्षणम् ।
विदुषां संस्कृतज्ञानां सम्मानश्चापि सर्वशः ॥८॥
परं संस्कृतविद्यायाः संस्कृतेर्विदुषां तथा ।
रक्षायै वा प्रतिष्ठायै तेषां चिन्ता न विद्यते ॥९॥
हिन्दुभिर्बहुधा सक्तैः सदा स्वोदरपोषणे ।
साहित्ये संस्कृतौ वापि न ध्यानमपि दीयते ॥१०॥
अवश्यं पठितुं तस्मात् यत्किञ्चिदपि संस्कृतम् ।
प्रेरणीयोऽखिलो लोकः सामान्यो वा महत्तमः ॥११॥
विनष्टे संस्कृते धर्मः संस्कृतिः स्वाभिमानिता ।
अथ राष्ट्रीयमैक्यं वा रक्षितुं शक्यते कथम् ॥१२॥

इदं ज्ञात्वाऽपि यो तथ्यं ध्यानमत्र ददाति नो ।
स महानपि दुर्बुद्धिर्गर्हणीयश्च सर्वथा ।।१३।।
विना वेदं विना गीतां विना रामायणीं कथाम् ।
कालिदासं विना कश्चिद् भारतीयः कथं भवेत् ।।१४।।
वृद्धैरपि जनैस्तस्माद् देशधर्माभिमानिभिः ।
अवश्यं पठनीयेयं पुण्या संस्कृतभारती ।।१५।।
धन्यं तस्य पटेलस्य जीवनं येन वार्द्धके ।
कार्याऽधिक्येऽपि सुप्रीत्या संस्कृतं पठितं श्रमात् ।।१६।।*
तस्मात् सर्वे नरा नार्यो युवानः स्थविरा अपि ।
पठन्तु शपथं कृत्वा दिव्यां संस्कृतभारतीम् ।।१७।।†
चर्चा ज्ञानाय गीतायाः चाणक्यस्य च नीतयः ।
सूक्तयः कालिदासस्य सन्तु भूयो मुखे मुखे ।।१८।।
रचित्वाऽथ स्वसाहित्यं सुचिराच्चिस्पृहैस्तु यैः ।
देशसेवा कृताऽपूर्वा संस्कृतिश्चापि रक्षिता ।।१९।।
तेषां विद्वद्वराणाञ्च इदमीदृगुपेक्षणम् ।
कृतज्ञता वा न्याय्यं वा वक्तुं किं खलु शक्यते ।।२०।।
सर्वमेतत् सुविस्पष्टं वक्तव्यं लोकसंसदि ।
बोधनीयोऽनुनेयश्च नरनारीगणोऽखिलः । २१।।
नेतारोऽपि तथा सर्वे प्रष्टव्या निर्भयं बुधैः ।
यद् वदन्ति सभास्वेते तत् कथं पूरयन्ति नो ।।२२।।
संस्कृतस्य सभास्वेभिः कृत्वा सुबहु कीर्तनम् ।
मन्त्रालये समागत्य मौनमालम्ब्यते कथम् ।।२३।।

---

* दृश्यताम्—महादेव भाई की डायरी पृ० ३१३, ३२५, ३५५ ।
अस्मिन् पुस्तके सरदार वल्लभ भाई पटेलस्य संस्कृतशिक्षणविषये विस्तृता मोदावहा च चर्चा अस्ति ।

† अस्मिन् विषये कार्यालयात् प्रकाशितं "संस्कृत, क्यों पढ़ें, कैसे पढ़ें, क्या पढ़ें" इति पुस्तकमवश्यं द्रष्टव्यं तदनुसारमेव च सर्वे शिक्षिता जनाः संस्कृतपठनाय प्रेरणीयाः ।

राधाकृष्णान् महाभागस्तथा नेहरूमहोदयः ।
विद्वान् जाकिर हुसेनश्च तथा देशमुखः सुधीः ॥२४॥
श्रीछागलामहाभागो विद्वान् श्रीभक्तदर्शनः ।
गाडगिल् श्रीप्रकाशश्च के० सन्तानम् तथैव च ॥२५॥
श्रीमान् पणिक्करश्चापि श्रीमाली काटजूस्तथा ।
श्रीद्वारकाप्रसादश्च मिश्रः पाटस्करस्तथा ॥२६॥
श्रीरामसुभगः सिंहः रामस्वामी महोदयः ।
श्रीविश्वनाथदासश्च त्रिपाठी कमलापतिः ॥२७॥
एते संस्कृतशिक्षाया माहात्म्यं बहुहेतुभिः ।
कीर्तयन्ति निजां भक्तिं दर्शयन्ति तथाऽसकृत् ॥२८॥
परं निजविचारेभ्यो दद्युश्चेत् कार्यरूपताम् ।
लगेयुः कति वा होराः संस्कृतस्य समुन्नतौ ॥२९॥
बोधयन्तु मनागेतान् लज्जयन्तु तथा सकृत् ।
चेतयन्तु पुनः कर्तुं सार्थकं निजभाषणम् ॥३०॥
भाषणान्यखिलान्येषां वक्तव्यानि तथैव च ।*
संगृह्य पुरतस्तेषां स्थापनीयानि पण्डितैः ॥३१॥
अथ ये लोकसेवाया आयोगस्याधिकारिणः ।
अन्ये नियुक्तिकर्तारो ये वा नानापदेषु च ॥३२॥
तेऽपि संस्कृतशिक्षायाः स्नातकानां नियुक्तये ।
प्रोत्साह्याः बोधनीयाश्च बाधनीयाश्च जातुचित् ॥३३॥
राज्यद्वारा प्रदत्तस्याधिकारस्यापि मुक्तये ।
किमेते संस्कृतज्ञेभ्यो ददतेऽवसरं नहि ॥३४॥

---

* कार्यालयात्प्रकाशिते "संस्कृत शिक्षा के सम्बन्ध में सुप्रसिद्ध नेताओं तथा विद्वानों के विचार" इति नामके पुस्तके एतेषां भाषणानि वक्तव्यानि च पाठकैः द्रष्टव्यानि ।

तथैव संस्कृतविश्वपरिषदः तथा अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य च वार्षिकेषु विवरणपुस्तकेषु संगृहीताः सम्मतयश्च द्रष्टव्याः ।

रुद्ध्वा मार्गे मनागेतान् गत्वा कार्यालयेऽथवा ।
पृच्छन्तु संहता भूत्वा कर्तुं न्यायोचितां क्रियाम् ॥३५॥
संस्कृतस्याङ्गलकक्षाभिः साम्यं यत् स्वीकृतं खलु ।
एते तत्पूर्तयेऽवश्यं कर्तव्या विवशा बुधैः ॥३६॥

अथ सम्वाददातारः पत्रकारास्तथैव च ।
आकाशवाण्या अध्यक्षाः चलचित्रप्रचारकाः ॥३७॥
तेऽपि संस्कृतसम्बन्धे स्नेहौदार्य्यमयीं दृशम् ।
धृत्वा तस्य प्रसारार्थं प्रेरणीया मनीषिभिः ॥३८॥

केचिदुद्योगशिक्षाया विज्ञानस्य च पण्डिताः ।
मन्यन्ते संस्कृतज्ञानं नैवावश्यकमात्मने ॥३९॥
संस्कृतं पठनीयं वा विज्ञानं वेति ते जनाः ।
शिक्षां वैकल्पिकीं प्रायो मन्यन्ते हितकारिणीम् ॥४०॥
अनयैव धियैतस्मिन् प्रदेशे तु प्रशासनात् ।
संस्कृतं चैव विज्ञानं द्वयं हन्त पृथक् कृतम् ॥४१॥
एषा विकल्पबुद्धिस्तु भारतीयमनीषिषु ।
न्यूना वाऽप्यधिका प्रायश्चिरादेव विराजते ॥४२॥
परमेष विकल्पस्तु व्यक्तेर्देशस्य वा कृते ।
कृते मानवतायाश्च नहि कल्याणकारकम् ॥४३॥
विज्ञानं वाऽन्यशास्त्रं वा यत्किञ्चित् पठ्यतां जनैः ।
संस्कृतं तु विना तेषामपूर्णा खलु शिक्षणम् ॥४४॥*

---

* विषये ऽस्मिन् श्री के० एम० मुंशी प्रणीतं "The creative art of life" इति पुस्तकमवश्यं द्रष्टव्यं पाठकैः ।

पुनश्च अमेरिकादेशस्य महान् वैज्ञानिकः श्री ओपेन हैमर महोदयः ( Oppen Haimmer ) संस्कृतभाषायाः सुचिरमध्ययनं कृतवान् इति नेहरूमहोदयेन प्रधानमन्त्रिणा संस्कृतायोगस्यसदस्याः तदीयसाक्षात्कारावसरे सूचिता इत्यपि ज्ञातव्यम् ।

Riport of the Sanskrit Commission पृ० ७६ ।

( अग्रेऽपि )

संस्कृतज्ञानयुक्ताः स्युर्वैज्ञानिकबुधा यदि ।
अधिकं ते हितं कुर्युरात्मनश्च परस्य च ॥४५॥ ❀

यथा शक्तिं विना देहो नयनं तारकां विना ।
प्राणी वृत्तं विना तद्वत् शिक्षणं संस्कृतं विना ॥४६॥

सर्वाभिरपि विद्याभिस्तावत् शोभा न धीमताम् ।
यावत् संस्कृतशिक्षायास्तिलकं नैव धार्यते ॥४७॥
धर्म-शील-सदाचारैर्भाषाज्ञानादथोत्तमात् ।
स्वाभिमानाय चाऽप्येतत् संस्कृतं परमं हितम् ॥४८॥
तस्मात् संस्कृतशिक्षेयं धर्माऽध्यात्मविवर्द्धिनी ।
शीलसौजन्यदात्री च प्रेयःश्रेयःप्रसाधिका ॥४९॥—

सर्वेभ्यो भारतीयेभ्यः सर्वैः शिक्षाधिकारिभिः ।
निमील्य नयने कार्या अनिवार्या निरन्तरम् ॥५०॥
एतदर्थन्तु सम्पूर्णैः प्राणान् दत्त्वाऽपि पण्डितैः ।
प्रयत्नः परमः कार्यो यावत्सिद्धिर्न जायते ॥५१॥

इदं संस्कृतशिक्षाया रहस्यं बुद्धिसम्मतम् ।
सर्वेभ्यो देशवासिभ्यो बोधनीयं यथाबलम् ॥५२॥

अथ ये "स्कूल-कालेज-डिग्रीकालेज" वर्तिनः ।
शिक्षका अन्यभाषाणां विषयाणाञ्च केचन ॥५३॥
संस्कृतेन समं किञ्चित् संस्कृताऽध्यापकैस्तथा ।
ईर्ष्यां वा वैमनस्यं वा दधते यत्रकुत्रचित् ॥५४॥
तेषां वृत्तमिदं दृष्ट्वा विस्मयो जायते महान् ।
किन्निमित्तमिदं वैरं हन्त संस्कृतशिक्षया ॥५५॥

---

❀ अथ च भारतस्य श्री जगदीश चन्द्र वसु, सर् सी॰ वी॰ रमन, श्री मेघनाद शाहा प्रभृतयः सर्वेऽपि वैज्ञानिकाः संस्कृतज्ञाः संस्कृतपक्षपातिनश्च आसन्नित्यपि तेषां जीवनस्य नानाप्रसङ्गेभ्यो ज्ञायते ।

अहो भारतनिन्दायाः शिक्षणं यद् विदेशिभिः ।
प्रदत्तं तस्य संरूढः प्रभावोऽद्यापि नो गतः ॥५६॥*
तदिमेऽपि जनाः केचित् प्रमत्ता इव मानवाः ।
न पश्यन्ति न शोचन्ति युक्तायुक्तं हिताहितम् ॥५७॥
तदिमे दयया पूर्वं बोधनीयाः समादरात् ।
भर्त्सनीयास्तथा केचित् सुभृशं प्रौढया गिरा ॥५८॥
मातुः स्तन्येन विद्वेषं यथा कुर्वीत बालकः ।
संस्कृतेन तथैवेयं शिक्षितानां विरोधिता ॥५९॥
अथ प्रधानाचार्याश्च शिक्षासंस्थासु तासु ये ।
संस्कृते तेऽपि सम्प्रार्थ्या ध्यानं दातुं विशेषतः ॥६०॥
कुर्वन्तु संस्कृते प्रीतिं संस्कृताध्यापके तथा ।
सम्माने वेतने वाऽपि भेदभावं भजन्तु नो ॥६१॥
श्रीमत्केशवचन्द्रेण विदुषा निजपौरुषात् ।
यथैका पाठशालाऽपि प्रीत्या सञ्चाल्यते चिरात् ॥६२॥
तथाऽन्येऽपि महीयांसः प्रधानाध्यापका बुधैः ।
सम्प्रार्थ्याः संस्कृते कर्तुं सुप्रीतिमधिकाधिकाम् ॥६३॥
विद्यालयेषु सर्वेषु गेहे गेहे च शोभने ।
सम्प्रार्थ्याः सूक्तिमन्त्राणां लेखनाय सुसज्जनाः ॥६४॥
सूक्तीनामथ मन्त्राणां तेषां ज्ञानं भवेन्न चेत् ।
भवद्भिरेव देयाः स्युरन्विष्याऽन्विष्य शोभनाः ॥६५॥
एवं स्वीयगृहस्याऽपि पुरतः पृष्ठतस्तथा ।
बहिरन्तस्तथा रम्या लेख्या आदर्शसूक्तयः ॥६६॥

---

* चार्ल्स ग्रान्ट, वॉर्डन, मेकाले प्रभृतयः प्राश्चात्यशासकाः भारतीयस्य समाजस्य साहित्यस्य च परमनिन्दका आसन् तथा भारते पाश्चात्यशिक्षायाः प्रसारस्य प्रबलसमर्थका अभूवन् ।

History of Education in India under the rule of the East India Company.

( By B. D. Basu )

श्रीमत्परशुरामस्य गेहं गत्वा त्रिपाठिनः ।
दृश्यतां सूक्तिभिर्मन्त्रैः कीदृशं चारु चर्चितम् ॥६७॥

अथ ये संस्कृताचार्याः संस्कृतज्ञास्तथैव च ।
विद्वांसः साम्प्रतं सन्ति भाषाक्षेत्रेऽतिविश्रुताः ॥६८॥
श्रीहजारीप्रसादाख्यो द्विवेदी विदुषां वरः ।
आचार्यः श्री चतुर्वेदी विद्वान् राजबली तथा ॥६९॥
जानकीवल्लभो विद्वान् श्यामनारायणस्तथा ।
श्री विश्वनाथमिश्रश्च श्री वियोगी हरिस्तथा ॥७०॥
भगवत्शरणो विद्वान् ख्यातो देशविदेशयोः ।
लक्ष्मीनारायणो मिश्रो वाजपेयिमहोदयः* ॥७१॥
सेठो गोविन्ददासोऽसौ भाषासंग्रामकेशरी ।
मान्यो वनारसीदासश्चतुर्वेदी महारथः ॥७२॥
श्री सुधांशुश्चतुर्वेदी श्री नारायण एव च ।
कविवर्यो दिनकरः पन्तः काव्यकलानिधिः ॥७३॥
एते सर्वे कथं स्वीयं प्रभावं शक्तिमेव च ।
संस्कृतस्य समुन्नत्यै यथावन्नोपयुञ्जते ॥७४॥—
इति गत्वाऽन्तिके सर्वे प्रष्टव्याः सादरं बुधाः ।
किञ्चित् कर्तुं मदुन्नत्यै प्रार्थनीयास्तथाऽसकृत् ॥७५॥

अथ ये केऽपि विद्यन्ते महान्तो लघवोऽपि वा ।
विद्वांसो भारतीयानां भाषाणां सेवकास्तथा ॥७६॥
तेऽपि देवगिरं मत्वा निजभाषासहायिकाम् ।
तस्या अपि समुन्नत्यै किञ्चित् कुर्वन्तु निश्चितम् ॥७७॥
अनधीत्य तथोपेक्ष्य एते संस्कृतभारतीम् ।
लप्स्यन्ते किन्नु वैदुष्यं जीविष्यन्ति कथं नु वा ॥७८॥

अथ ये प्रत्नतत्त्वज्ञा भाषाशास्त्रानुशीलकाः ।
भारतीयेतिहासस्याऽध्येतारोऽध्यापकास्तथा ॥७९॥

---

* श्री पं० किशोरीदास वाजपेयी, कनखल, हरिद्वार ।

विधि-दर्शनशास्त्राणां पाठका लेखका अपि ।
तेऽपि संस्कृतशिक्षायै बोधनीया मनीषिभिः ॥८०॥
एतेषां संस्कृतज्ञानं विना कीदृगहो दशा ।
जायते दयनीयेति बोध्या रहसि मित्रवत् ॥८१॥
अनुवादेन नः कार्यं सेत्स्यतीति वदन्ति ये ।
वेट्टी हैमन-वक्तव्यं द्रष्टव्यं नूनमेव तैः ॥८२॥*

अथ ये यवनाः केचिद् हिन्दीप्रान्तनिवासिनः ।
मन्यन्ते संस्कृताऽधीतौ दोषं वैधर्म्यमेव वा ॥८३॥
तथा संस्कृतशब्दानां सम्यगुच्चारणेऽपि वा ।
यवना ये नु मन्यन्ते गौरवे हानिमात्मनः ॥८४॥
तेऽपि सर्वे बुधैः प्रीत्या बोधनीया निदर्शनैः ।
संस्कृतं पठितुं वक्तुं श्रोतुञ्च परमादरात् ॥८५॥
यदि वङ्गोत्कलासामकेरलादिनिवासिनाम् ।
हानिः संस्कृतसम्पर्कात् यवनानां न जायते ॥८६॥†
तदा यवनबन्धूनां विहारोत्तरवासिनाम् ।
हानिः संस्कृतशब्दानां प्रयोगे का भविष्यति ॥८७॥
जावादिदूरदेशेषु तत्रत्यैर्यवनैर्यदि ।$
भूयान् संस्कृतशब्दानां प्रयोगः क्रियते मुदा ॥८८॥

---

* अनुवादमात्रस्य अध्ययनेन संस्कृतस्य मौलिकं ज्ञानं न सम्भवतीत्यस्मिन् विषये प्रोफेसर वेट्टी हैमन ( Pro. Betty Heimann ) लिखितः
"why Study Sanskrit" इति लेखो द्रष्टव्यः ।
भाण्डारकर रिसर्च इन्स्टीटयूट पत्रिका, पूना, जुलाई—अक्टूबर १९४७ ।

† एतत्प्रादेशिकभाषासु हिन्दुभिरिव यवनैरपि लेखकैः संस्कृतशब्दानामेव विपुलः प्रयोगः क्रियते न तु अरबी-फारसी-शब्दानाम् ।
अस्मिन् विषये कार्यालयात् शीघ्रमेव प्रकाशयिष्यमाणं "संस्कृत और मुसलमान" इति पुस्तकं द्रष्टव्यम् ।

$ भारतीय आर्यभाषा और हिन्दी ( डा० सुनीतिकुमार चाटुर्ज्या )
श्याम की संस्कृतमूलक शब्दावली, भूमिका ( डा० सम्पूर्णानन्द )

तदा संस्कृतभाषाया जन्मभूमौ नु भारते ।
अहो संस्कृतशब्दानां प्रयोगो किमु नोचितः ॥८९॥
अतो यवनजातीयैर्बालकैर्युवकैरपि ।
कर्तव्या संस्कृते प्रीतिरध्येतव्यं तथैव च ॥९०॥
अहो यवनसम्राजां पश्यन्त्वौदार्यमुत्तमम् ।
यैः स्वयं पठितं प्रीत्या पोषितं चापि संस्कृतम् ॥९१॥※
स्वयं दाराशिकोहस्य[१] रहीमस्य[२] च विश्रुताः ।
कृतयः कस्य नानन्दं जनयेयुर्विपश्चितः ॥९२॥
अतः सङ्कीर्णतां हित्वा सर्वैर्यवनबन्धुभिः ।
संस्कृतं संस्कृतिर्वापि ज्ञातव्या परमादरात् ॥९३॥
अस्मिन् देशे जनिमतां अस्मिन् देशे च जीवताम् ।
एतद्देशीयहिन्दूनां वंशजानां च वस्तुतः ॥९४॥—
यवनानामियं बुद्धिर्न हिता नाऽपि शोभना ।
इति ते सुष्ठु संबोध्याः युक्तिप्रीतिपुरस्सरम् ॥९५॥
एवं ये खृष्टधर्माणो हिन्दवः सन्ति भारते ।
तेऽपि संस्कृतसम्पर्कं आनेया अधिकाऽधिकम् ॥९६॥
सम्मान्यः स तु मे पी० टी० कुरियाक्कु महोदयः ।†
महाविद्यालयो येन केरलेषु प्रचालितः ॥९७॥

---

※ Muslim Patronage to Sanskrit learning.
( By Dr. Jatindra Bimal chaudhury )

अरब और भारत के सम्बन्ध ।

१—A Sanskrit letter of Mohamad darashukoh.
( अदयार लाइब्रेरी, मद्रास द्वारा प्रकाशितं लघु पुस्तकम् )

समुद्रसंगमः ( दाराशुकोहप्रणीतः ग्रन्थः ) ।

२—खेटकौतुकं ज्यौतिषपुस्तकं, स्फुटा ललितकविताश्च ।

† कुरियाक्कुमहोदयेन केरलेषु पावर्टीनामके स्थाने साहित्यदीपिकासंस्कृत कलाशालानाम्ना संस्कृतमहाविद्यालयः स्थापितो वर्तते । विशेषपरिचयः लेखकस्य "दक्षिणदर्शनम्" नाम्नि दक्षिणभारतीययात्राया विवरणात्मके पुस्तके द्रष्टव्यः ।

न केवलमसौ विद्वान् स्वयं किन्त्वमुना पुनः ।
संस्कृतं पाठितौ सम्यक् द्वौ स्वकीयौ सुतावपि ॥९८॥
तस्मादेव तु तच्छिष्यैः पण्डितैर्ब्राह्मणैरपि ।
तस्य संस्कृतसेवायै गीयते सादरं यशः ॥९९॥*

अथैते वैदिका ज्योतिर्वेत्तारः कर्मकाण्डिनः ।
पुरोधसः पूजकाश्च तथा पण्डामहाशयाः ॥१०१॥
एतेष्वपि च ये पूर्णं संस्कृतं नैव जानते ।
पूजापाठाद्यनुष्ठानं कुर्वतेऽशुद्धमेव च ॥१०२॥
ते सर्वेऽपि सभां कृत्वा युष्माभिः स्वीयमण्डले ।
संस्कृतं शिक्षितुं योज्या लब्धुं तत्र च नैपुणम् ॥१०३॥
एते पुरोधसः शिक्ष्याः स्वयं स्वप्रतिवेशिनः ।
पण्डानां चापि कर्तव्यः समुद्धारः सुशिक्षया ॥१०४॥
अनर्थः सुमहानेष यदेते वैदिकादयः ।
शुद्धया न गिरा प्रायः कुर्वते पूजनादिकम् ॥१०५॥†
एते यज्ञादिकार्येषु बहुधा यदि संस्कृते ।
वदेयुस्तेन शोभा स्याद् धर्मरक्षा च भूयसी ॥१०६॥
यद्येते संस्कृतं ब्रूयुर्यजमानगृहं गताः ।
तेऽपि संस्कृतविज्ञाः स्युः प्रतिष्ठा च निजा भवेत् ॥१०७॥
अतः संस्कृतविद्वद्भिर्धर्मरक्षाभिलाषिभिः ।
प्रयत्नः कोऽपि कर्तव्यस्तदर्थमिति मे मतिः ॥१०८॥

उपवीतधरान् सर्वान् बोधयन्तु द्विजानपि ।
धनाढ्यानथवा दीनान् महतो वा लघूनथ ॥१०९॥

---

* कुरियाक्कुमहोदयस्य मलयालमभाषामयः अभिनन्दनग्रन्थो द्रष्टव्यः ।

† नाऽसंस्कृतां वदेद् वाचं कर्म कुर्वन्नयज्ञियाम् ।
यज्ञेऽपशब्दतो जल्पन् प्रायश्चित्तीयते नरः ॥ बृहस्पतिः ।
तस्माद् यज्ञे नाऽपभाषितवै न म्लेच्छितवै । म्लेच्छो ह वा एष यदपशब्दः ।
पातञ्जलमहाभाष्यम् ।

यस्यां कस्यामपि स्थित्वा जीविकायामिमे यथा ।
पठेयुः संस्कृतं नूनं वेदमन्त्रांस्तथैव च ॥११०॥

अथ साधुमहान्तांश्च तथा संन्यासिनोऽखिलान् ।
संस्कृताऽध्ययनं कर्तुं प्रेरयन्तु यथाबलम् ॥१११॥
एतेषां जीवनं दृष्ट्वा व्यर्थं देशनिवासिनः ।
प्रायः सर्वेऽपि कुप्यन्ति अपशब्दान् वदन्ति च ॥११२॥
यद्येते केवलं कुर्युः संस्कृताऽध्ययने श्रमम् ।
उभयोरपि रक्षा स्यात् सम्मानश्चापि सर्वशः ॥११३॥

शिक्षिता महिलाश्चापि विधवाश्च विशेषतः ।
संस्कृताऽध्ययने प्रीत्या नियोज्यास्तद्धितैषिभिः ॥११४॥
स्त्रियश्चेत् संस्कृतज्ञाः स्युस्तदाऽवश्यं गृहे गृहे ।
संस्कृतस्य प्रचारः स्याद् विनोबावचनं यथा ॥११५॥❀
अथ सा षष्टिवर्षीया लक्ष्मीदेवी कृतश्रमा ।
पुराणाचार्यवर्गे चेत् समुत्तीर्णा परिश्रमात् ॥११६॥
वाचस्पतिपदञ्चापि प्राप्तुं प्रयततेऽधुना ।
तत्कथं न युवत्यस्तत्सामान्यज्ञानमाप्नुयुः ॥११७॥
इदन्तु मे महत्कष्टं यद् बुधाः प्रार्थिता अपि ।
पाठयन्ति नहि स्वीयामपि पत्नीं मनोरमाम् ॥११८॥
मेघदूतादिकाव्यानां पठनाय रुदन्त्यपि ।
उपेक्षिता मया दृष्टा पत्नी लक्ष्मणशास्त्रिभिः ॥११९॥
एवञ्चेद् विदुषामेव स्वयं श्रद्धा न जायते ।
उदासते तथाऽत्यन्तं स्त्रीणां दोषस्तदा नु कः ॥१२०॥

---

❀ "पुरुष अगर कहेंगे कि हमें इतनी भाषायें सीखने के लिए समय नहीं, तो भोजन करते समय बहनें उनसे संस्कृत में बातें करें। बहनों को तीनों भाषायें सीखनी चाहिए। (मातृभाषा, हिन्दी और संस्कृत)
भाषा का प्रश्न पृ० ४६।

धन्यः श्रीनगरस्थाऽसौ परमानन्दपण्डितः ।
येन स्त्रीणां कृते विद्यापीठं संस्थापितं महत् ॥१२१॥†

अथ केचित्तदज्ञानात् केचित् श्रद्धातिरेकतः ।
मन्यन्ते संस्कृतां भाषां क्लिष्टात् क्लिष्टतरां भुवि ॥१२१॥

अत एव न तेऽध्येतुं प्रवर्तन्ते स्वयं भिया ।
भीषयित्वा तथा पाठाद् वारयन्त्यपरानपि ॥१२२॥

तस्मात् संस्कृतभाषायाः प्रचारे वाधिकामिमाम् ।
नाशयन्तु बुधा भ्रान्तिं स्वगेहे व्यवहारतः ॥१२३॥

भवन्तो भवने स्वीये वदेयुर्यदि संस्कृतम् ।
द्रुतमेव कुटुम्बे स्युः सर्वे संस्कृतवेदिनः ॥१२४॥

गेहं कपिलदेवस्य गत्वा पश्यन्तु बालकान् ।
बालिका बालभृत्यं च वदतः संस्कृतं सदा ॥१२५॥

गोपालशास्त्रिणस्तेषां पुत्रौ पुत्रवधूस्तथा ।
स्वभावतः सदा सर्वे वदन्ति सुरभारतीम् ॥१२६॥

सीतारामस्य विदुषस्तनयाः सुप्रशिक्षिताः ।
लघवोऽपि सदा शुद्धां ब्रुवते संस्कृतां गिरम् ॥१२७॥

एषां तादृशमालापं संस्कृते सरलं प्रियम् ।
पश्यतः कस्य नो नश्येत् काठिन्यस्य भयं द्रुतम् ॥१२८॥

तस्माद् यः कोऽपि यत्रापि संस्कृतं कठिनं वदेत् ।
मुखं तस्य निरोद्धव्यं भवद्भिर्व्यवहारतः ॥१२९॥

संस्कृतोन्नतये सर्वे प्रयतेरन् बुधा यदि ।
भोजविक्रमकालोऽसौ नूनं पुनरिहाव्रजेत् ॥१३०॥

अथ ये राज्यकार्येषु नियुक्ता बहवो जनाः ।
संस्कृतं ज्ञातवन्तोऽपि तत्प्रयोगं न कुर्वते ॥१३१॥

तेऽपि सर्वे सदा किञ्चित् संस्कृते वदितुं मुदा ।
लेखितुं चापि पत्रादिं प्रेरणीयाः समादरात् ॥१३२॥

---

† श्रीनगरे स्थापितं श्रीरूपादेवीशारदापीठनामकं सुविशालं संस्कृतप्रधानं महिलाशिक्षणकेन्द्रम्

श्लाघ्योदेशमुखो विद्वान् यो महोच्चपदे स्थितः ।
आंग्लविद्वत्समाजेन वेष्टितोऽपि दिवानिशम् ॥१३३॥
आलापे भाषणे लेखे कवित्वे चापि सादरम् ।
प्रयुंक्ते संस्कृतं हृद्यं संस्कृतज्ञैर्जनैः सह ॥१३४॥
गत्वा सुरेन्द्रनाथश्च द्रष्टव्योऽसौ बुधैर्बुधः ।
आंग्लभाषाप्रवीणोऽपि राज्यकार्यरतोऽपि यः ॥१३५॥—
गद्यपद्यमयं पत्रं सदा लिखति संस्कृते ।
भाषते चापि सानन्दं संस्कृते विबुधैः सह ॥१३६॥
एवं सर्वेऽपि विद्वांसः शासका अधिकारिणः ।
संस्कृतं चेत् प्रयुञ्जीरन् आनन्दः सुमहान् भवेत् ॥१३७॥
अथ संस्कृतशून्या ये सर्वथा तेऽपि पण्डितैः ।
प्रोत्साह्याः संस्कृते वक्तुं दश पञ्च पदान्यपि ॥१३८॥*
लोकानामेव द्रव्याद्यदानादिसहयोगतः ।
सर्वैः संस्कृतविद्वद्भिरधीतं खलु संस्कृतम् ॥१३९॥
तस्मात्तैरपि निष्कामं कांश्चिदध्याप्य संस्कृतम् ।
लोकसेवा विधातव्या आनृण्याय यथाबलम् ॥१४०॥ †
ये च संस्कृतसेवायां संलग्नाः सन्ति केचन ।
प्रोत्साहनीयास्ते सर्वे दानसम्माननादिभिः ॥१४१॥
केन्द्रे च संस्कृतोन्नत्यै समितिः स्थापिता तु या ।
तयाऽपि निखिलोपायाः सप्रपञ्चं निरूपिताः ॥१४२॥
तत् पुस्तकमपि प्राज्ञै राद्योपान्तं विलोक्यताम् ।
तन्निर्दिष्टपथा चापि यत्नः सर्वैर्विधीयताम् ॥१४३॥

---

* हिन्दी-अंग्रेजी विदुषां कृते दैनिकव्यवहाराय उपयुक्तपदावली कार्यालयतः प्रकाशिता वर्तते । अभिलाषिभिः सा तत एव ग्रहीतुं शक्यते ।

† सामान्यजनानां संस्कृतशिक्षणाय कार्यालयात् सरला पद्धतिः सरलानि पुस्तक-पुस्तिकादीनि पत्रकाणि ( पोस्टर ) च प्रकाशितानि सन्ति । तेषां साहाय्येन संस्कृतपण्डितैः स्वसमीपवासिनः केचन जना अवश्यं संस्कृतं शिक्षणीयाः ।

अथ तत्समितेः सर्वे सदस्याः कृतिशालिनः ।
अध्यक्षाश्च महाप्राज्ञाः पोतदारमहोदयाः ॥१४४॥—
एते सर्वे यथाकालं निर्दिशेयुर्यथा यथा ।
सर्वं तदपि कर्तव्यं यावच्छक्यं मनीषिभिः ॥१४५॥
अथ वैदेशिका येऽपि संस्कृतज्ञा मनीषिणः ।
पठने पाठने लग्ना लेखने वाऽथ शोधने ॥१४६॥
तेऽपि सर्वे बुधैः सर्वैरादर्तव्या इहागताः ।
पुस्तकादिप्रदानेन स्नेहसन्दर्शनेन च ॥१४७॥
एषु ये संस्कृते वक्तुं, कवितां लेखितुं तथा ।
व्याख्यातुं प्रयतन्ते वा प्रोत्साह्याः सर्व एव ते ॥१४८॥*
तेषां सम्मेलनं कार्यं देयं साहाय्यमेव च ।
शिक्षणीयाश्च ते प्रीत्या भाषितुं लेखितुं तथा ॥१४९॥
सश्लाघ्यः श्रीजगन्नाथोपाध्यायो येन सर्वदा ।
वैदेशिकानां साहाय्यं कर्तुं सम्यक् प्रपत्यते ॥१५०॥
फड़केशास्त्रिणस्तेऽपिं सम्मान्या यैर्विदेशिनः ।
पत्राचारेण शिक्ष्यन्ते संस्कृतं दूरदेशतः ॥१५१॥

---

* अनेके संस्कृतज्ञा वैदेशिका विद्वांसः संस्कृते सम्यक्तया वक्तुं व्याख्यातुं च कामयन्ते तथा तदर्थं प्रयतन्ते अपि । यथा—स्पेनदेशवासी श्री रेव० फा० ज्योर्ज जिस्पेर्त एस० जे० महोदयः अस्मिन्नेव वत्सरे कानिचिद् दिनानि कार्यालये संस्कृते भाषणस्याभ्यासं कर्तुमागच्छति स्मा । वैदेशिकैः संस्कृतपण्डितैर्लिखितानि संस्कृतपद्यानि निम्नाङ्कितेषु निबन्धेषु द्रष्टव्यानि । यथा—

१— पाश्चात्यविदुषां संस्कृतपद्यानि (डा० वे राघवः)
संस्कृतप्रतिभा, अक्टूबर, १९५९

२—रूसी संस्कृतज्ञ श्रीं कल्याणोव (श्रीमती कमलारत्नम्)
सरस्वती, नवम्बर, १९५७

३—संस्कृतरत्नाकर पत्रिकायाः श्री मधुसूदनओझाअभिनन्दनांके श्रीमताओझामहोदयानां विदेशयात्राया वर्णनम् पृ० २३३ ।

अथ ये केऽपि विद्वांसो महान्तो लघवोऽपि वा ।
वर्तन्ते देवभाषायाः प्रचारे निरताः सदा ॥१५२॥
ये च पाण्डित्यरक्षायां संलग्नाः सन्त्यहर्निशम् ।
पठनैः पाठनैर्लेखैरभ्यासैः शास्त्रचिन्तनैः ॥१५३॥
यानि कानि च विद्यन्ते सभा-सम्मेलनानि च ।
प्रकारैर्विविधैः स्वीयैः संलग्नानि मदुन्नतौ ॥१५४॥
येच केचन साहित्यं लिखन्ति नवमुत्तमम् ।
संगीतेऽभिनये वापि वक्तृत्वे वा विशारदाः ॥१५५॥
एतेषामपि सर्वेषां कार्यं प्रोत्साहनं बुधैः ।
प्रेम्णा साहाय्यदानेन स्वागतेनाऽभिनन्दनैः ॥१५६॥

अथ—

इतोऽधिकं च यत्कार्यं देशकालानुसारतः ।
कर्तव्यं तत् स्वयं चिन्त्यं बुद्धिमद्भिर्मनीषिभिः ॥१५७॥†
ध्यात्वा श्रीशंकराचार्यं चाणक्यं सायणं तथा ।
तिलकं मालवीयं च कर्मिष्ठाः सन्तु पण्डिताः ॥१५८॥
इत्येवं निजदोषाः शासनदोषाः समाजगतदोषाः ।
सर्वे महात्रिदोषाः शमनीयाः संस्कृतोन्नतये ॥१५९॥

एषा संस्कृतभारती विजयतां भूयो यथा भूतले
देशो संस्कृतसेविनः समुचितं स्थानं लभन्तां यथा ॥
श्रेयः संस्कृतसंस्कृतिर्वितनुतां विश्वस्य भूयो यथा
तत्सर्वं क्रियतां यथामतिबलं सम्मिल्य सर्वैर्बुधैः ॥१६०॥

———

† अस्मिन् विषये कार्यालयात् प्रकाशितानि निम्नांकितपुस्तकानि द्रष्टव्यानि—
१—संस्कृतप्रचार के पचास रचनात्मक कार्यक्रम ।
२—संस्कृतविद्यालयों के लिए संस्कृतप्रचार का द्वादशसूत्री कार्यक्रम ।
३—हिन्दी-अंग्रेजी विद्यालयों के लिये संस्कृतसम्बन्धी सुझाव ।
४—संस्कृत और ब्राह्मण ।

## उपसंहारः

इत्येते कथिताः सर्वे सन्देशा ये हृदि स्थिताः ।
प्रायः सर्वेऽप्यभिप्रायाः समासेन निरूपिताः ॥१॥
चिरेण हृदि या चिन्ता या व्यथा या च वेदना ।
आसीद्दन्दह्यमाना सा समस्ता प्रकटीकृता ॥२॥
निष्कास्य निखिलांश्चेमान् अन्तःशल्यमिव स्थितान् ।
वेगान् मर्मभिदः किञ्चिदिदानीं निर्वृतिं गता ॥३॥
अथ कश्मीरतः कन्याकुमारीनगरावधि ।
जगन्नाथपुरीं यावद् द्वारकायास्तथैव च ॥४॥
सम्पूर्णे भारते खण्डे ग्रामेषु नगरेषु वा ।
यावन्तः सन्ति विद्वांसो भवन्तः कृतिशालिनः ॥५॥—
कृपया निखिलैरेते सन्देशा अखिला अपि ।
अध्येया मननीयाश्च पूरणीया यथाबलम् ॥६॥
अयं संस्कृतविद्यायाः सर्वेषां विदुषां तथा ।
छात्राणामुन्नतेश्चापि राजमार्गः प्रदर्शितः ॥७॥
इमं स्वस्त्ययनं धन्यं यशस्यं मानवर्द्धनम् ।
राजमार्गं समालम्ब्य सर्वतो विजयः श्रियः ॥८॥

इति कतिपयशब्दैरप्रियैः प्रीतिगर्भैः
रचितमिह विशुद्धेनाऽत्मनाऽवेदनं यत् ।
व्यथितहृदयदुःखोद्गारमेतं विदित्वा
बुधगण न विधेयः कोऽपि मय्यन्यभावः ॥१०॥

इदमपि भगवन्तं भूतभर्तारमन्ते
भवदुदयनिमित्तं भूरिशोऽभ्यर्थयेऽहम् ।
जगति सकलविघ्नध्वान्तविध्वंसपूर्वं
रविमिव बुधवर्गं श्रीः समभ्येतु भूयः ॥११॥

# परिशिष्टम्—क

## पुस्तके चर्चितानां व्यक्तीनां संक्षिप्तपरिचयः

### द्वितीयप्रकरणे, प्रथमसन्देशे—

श्री पं० गिरिधर शर्मा चतुर्वेदः (महामहोपाध्यायः) जयपुराभिजनः, सम्प्रति वाराणस्यां दुर्गाकुण्डस्थिते धर्मसंघभवने निवासः। आ० भा० संस्कृत-साहित्यसम्मेलनस्य जन्मदाता, प्रधानकार्यवाहः, अध्यक्षः तथा मार्गनिर्देशकश्च। संस्कृतभाषायाः भारतीयसंस्कृतेश्च सुमहान् प्रवक्ता संरक्षकश्च। संस्कृतशिक्षा-पद्धतौ परिवर्तनस्य पुरस्कर्ता पथप्रदर्शकश्च। संस्कृतजगतः सर्वमान्यः क्रियानिष्ठो वरिष्ठश्च नेता।

### तृतीयप्रकरणे, द्वितीयसन्देशे—

श्रीयुधिष्ठिरमीमांसकः—प्राच्यविद्याप्रतिष्ठान, अजमेर। कृतिः—संस्कृत व्याकरण शास्त्र का इतिहास (दो भाग), दशपाद्युणादिवृत्तिः, वैदिकस्वरमीमांसा, क्षीरतरङ्गिणी।

डा० कपिलदेवः—कुरुक्षेत्र विश्वविद्यालये संस्कृताध्यापकः। कृतिः—संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि।

डा० राम अवध पाण्डेयः—वाराणसेय संस्कृत विश्वविद्यालयस्य अन्ताराष्ट्रीयविभागे अध्यापकः। कृतिः—उणादिसूत्रों का तुलनात्मक अध्ययन, उज्ज्वलदत्त की वृत्ति का सम्पादन, उणादिकोश (Unadi Derivatives) इत्यादि।

### तृतीयप्रकरणे, पंचमसन्देशे—

श्रीदेवकृष्ण केशव पण्डितः—स्थानम् ग्रा०पं० कुकुरमुण्डा जि० पश्चिम खानदेशः। कृतिः—धर्मादर्शः (धार्मिक विवेचनेन सह नीतिशास्त्रीयविवेचनस्यापि विशालो ग्रन्थः)।

श्रीलक्ष्मण शास्त्री जोशी—स्था० प्राज्ञपाठशाला, वाई, जि० सतारा। (महाराष्ट्र) कृतिः—धर्मकोश, हिन्दूधर्म की समीक्षा, वैदिकसंस्कृति का विकाश।

श्री रघुनाथ शास्त्री कोकजे—स्था० लोनावले जि० पूना (महाराष्ट्र)। कृतिः—धर्मस्वरूपनिर्णय, भारतीय तर्कशास्त्र। (मराठी)।

श्रीपाद दामोदर सातवलेकरः—स्था० स्वाध्याय मण्डल, पारडी, जि० सूरत (गुजरात)। कृतिः—स्पर्शास्पर्श (मराठी) महाभारतमीमांसा (हिन्दी, दो भाग) अन्ये च बहवः ग्रन्थाः।

म० म० डा० पाण्डुरंग वामन काणे—बम्बई विद्यापीठ, बम्बई। कृतिः धर्मशास्त्र विचार (मराठी) धर्मशास्त्रेतिहासः (अंग्रेजीभाषायां धर्मशास्त्रीयेतिहासस्य अनेकभागात्मकः महान् ग्रन्थः)।

डा० केशव लक्ष्मण दफ्तरी—स्था० विदर्भसंशोधन मण्डल, नागपूर। कृतिः—औपनिषदिक जीवनसौख्य (मराठी)।

म० म० श्रीधर शास्त्री पाठकः—(स्वर्गीयः) स्थानम् महाराष्ट्रम्। कृतिः अस्पृश्यतेचा शास्त्रार्थ (मराठी)।

श्री महादेवशास्त्री दिवेकरः—मिरज, (महाराष्ट्र) कृतिः—नवा हिन्दूधर्म, हिन्दुसमाज समर्थ कसा होईल ? धर्मशास्त्रमन्थन, आर्यसंस्कृति (मराठी)।

श्री गोविन्द महादेव जोशी—पूना। कृतिः—सनातनधर्माचे भूमिका, हिन्दूचे समाजरचना शास्त्र (मराठी) अस्मिन् पुस्तकद्वये श्रीजोशीमहोदयैः धर्मे परिवर्तनवादिनां सर्वे पक्षा आलोचिताः प्राचीनतायाश्च प्रबलं समर्थनं कृतम्।

श्री दीनानाथ शास्त्री सारस्वतः—रामदल, दरीबाकलां, दिल्ली। कृतिः—सनातन धर्मालोक(अनेक भाग)सनातनधर्मनाम्ना प्रचलितानां सर्वेषामाचाराणां सिद्धान्तानां च वैदिकत्वसाधकः सुमहान् पाण्डित्यपूर्णः ग्रन्थः।

महामहोपदेशक माधवाचार्यशास्त्री—धर्मधाम, सब्जी मण्डी, दिल्ली। कृतिः—पुराणदिग्दर्शन, क्यों, सनातनधर्म प्रभृतयः सनातनधर्मपोषकाः आधुनिकशङ्कानां समाधानकर्तारो भूयांसः ग्रन्थाः पुस्तिकाश्च।

श्रीवसन्तकुमार चट्टोपाध्यायः—कलकत्ता। कृतिः—धर्म प्रसङ्ग (बंगलाभाषायां पुस्तकद्वयम्) सनातनधर्मसम्बन्धे क्रियमाणानामाक्षेपाणां समाधानाय लिखितौ विवेचनापूर्णौ ग्रन्थौ।

श्रीपं० मोतीलाल शास्त्री—(स्वर्गीयः) मानवाश्रम, दुर्गापुरा, जयपुर। कृतिः—वैदिकधर्म-भारतीयसंस्कृतिसभ्यतासम्बन्धिनः शताधिकाः अद्भुतविवेचनापूर्णा विशालकाया अद्वितीया ग्रन्थाः।

श्री स्वामी करपात्री जी महाराज—धर्मसंघ, दुर्गाकुण्ड, वाराणसी। कृतिः—रामराज्य और मार्क्सवाद। (पृष्ठेषु साम्यवादस्य पाण्डित्यपूर्णा आलोचना)।

श्रीस्वामी दयानन्दः—(स्वर्गीयः) भारतधर्म महामण्डलम्, जगतगंज, वाराणसी। कृतिः—धर्मविज्ञान। (धर्मस्य वैज्ञानिकत्वसमर्थकः अत्युत्तमः ग्रन्थः)

पं०उमापतिद्विवेदः—(नकछेदराम इति लोकप्रसिद्धं नाम,गोरखपुर जनपद-वास्तव्यो महाविद्वान्, स्वर्गीयः)। कृतिः—सनातनधर्मोद्धारनामकश्चतुर्भागात्मको विशालो वैदुष्यपूर्णश्च ग्रन्थः। काशी हिन्दूविश्वविद्यालयात् प्रकाशितः।

डा० सर राधाकृष्णन्—(राष्ट्रपति महोदयः) कृतिः—हिन्दुओं का जीवन दर्शन। अन्ये च अनेके दर्शन-धर्म-संस्कृतिसम्बन्धिनः प्रायेण प्राचीनता-पोषकाः ग्रन्था लेखाश्च।

सूचना—उपरिचर्चिताः परिवर्तनवादिनः प्राचीनमतपोषकाश्च सर्वे ग्रन्था धर्मस्य यथार्थस्वरूपं जिज्ञासमानैरवश्यमवलोकनीयाः।

## तृतीयप्रकरणे, षष्ठसन्देशे—

डा० भीषण लाल आत्रेयः एम० ए०, लिट्० डी०—आत्रेयनिवास, लंका, वाराणसी। कृतिः—योगवाशिष्ठ और उसका सिद्धान्त, Yogavasistha and Modern thoughts।

राजेश्वर शास्त्री द्राविड़ः—वाराणसेयसाङ्गवेदविद्यालयस्य सञ्चालको भारतप्रसिद्धः प्रकाण्डो विद्वान्। दर्शनधर्मशास्त्रादिभिः सह नीतिशास्त्रस्याऽपि महीयान् ज्ञाता व्याख्याता च। कृतिः—शान्ति का अग्रदूत।

भट्टमथुरानाथ शर्मा—जयपुर। कृतिः—साहित्यवैभवम्, जयपुरवैभवम्, गोविन्दवैभवम् इत्यादयः। हिन्दी-उर्दू-वृत्तेषु रचिता अद्भुताः काव्यग्रन्थाः।

श्रीमदुमापतिद्विवेदः कविपतिः—ग्राम पकड़ी पो०पथरवेवा जि०देवरिया। कृतिः—पारिजातहरणम् (महाकाव्यम्) शिवास्तुतिः (शतकम्) स्फुटाः हिन्दी-संस्कृतकविताश्च। वर्तमानसंकेतः—तुलसीमहाविद्यालय, पडरौना, देवरिया।

श्रीपादशास्त्री हसूरकर—(स्वर्गीयः) इन्दौर। कृतिः—अनेकानि चरितपुस्तकानि।

बदरीनाथ झा—(स्वर्गीयः) मुजफ्फरपुर। कृतिः—गुणेश्वरचरितचम्पू, अन्योक्तिसाहस्री।

विद्यावाचस्पति श्रीमधुसूदन ओझा—(स्वर्गीयः) जयपुर। कृतिः—इन्द्र-विजय। विशेषपरिचयः अग्रे।

म० म० रामावतार शर्मा—(स्वर्गीयः) छपरा (विहार) कृ०—मुद्गर-दूतम्। धीरनैषधम्। भारतगीतिका।

श्रीनिवास शास्त्री वैद्यः—कलकत्ता। कृ०—चन्द्रमहीपतिः, वैभवपिशाचः।

म० म० मथुरानाथ दीक्षितः—अस्सी, वाराणसी । कृ०—अनेकानि नाटकानि ।

डा० मङ्गलदेव शास्त्री—प्राच्य अनुसन्धान परिषद्, इंग्लिसिया लाइन, वाराणसी । कृ०—जीवनज्योतिः । नवनिर्मितानां जीवन सन्देशदायिनीनां सरसललितसूक्तीनामनुपमो ग्रन्थः ।

प्र० अण्णङ्गराचार्यः—काञ्चीपुरम्, मद्रास । कृ०—गद्यपद्यमया अनेके वैदुष्यपूर्णा ग्रन्थाः दण्डकानि च ।

पण्डितराज श्री स्वामि भगवदाचार्यः—राजनगर सोसाइटी, अहमदाबाद ७ । कृ०—भारतपारिजातम्, पारिजातापहारः, पारिजातसौरभम् (काव्यानि) । स्तुतिकविताश्च ।

के० एस० श्री कृष्णमूर्ति शास्त्री—अन्नामलैपुरम्, मद्रास । कृतिः—वैदेहीविवाहम् (गद्यकाव्यम्) प्रकृतिविलासकाव्यम्, त्रिपुराभरणम्, सतीचरितम्, गोपीगोविन्दम् (नाटकम्), रामायणगीतम् (गीतम्) इ० ।

सौभाग्यवती क्षमा राव—(स्व०) बम्बई । कृतिः—मीरालहरी, सत्याग्रहगीता, श्रीतुका रामचरितम्, श्री रामदासचरितम्, कथापञ्चकम्, कथामुक्तावली इ० । नारीविरचिता अत्यद्भुताः कृतयः ।

श्रीचन्द्रशेखर मिश्र शर्मा—सम्भलपुर (उत्कल) । कृतिः—नीतिदर्पणः (उत्कलभाषानुवाद सहितः) । नीतिशिष्टाचारविषयकमत्युत्तमं पुस्तकम् । ।

डा० वी० राघवन्—७ श्रीकृष्णपुरम् मद्रास १४ । मद्रासविश्वविद्यालये संस्कृतविभागाध्यक्षः । "संस्कृतप्रतिभा" नाम्न्याः साहित्य अकादमी, दिल्लीतः प्रकाश्यमानायाः षाण्मासिकपत्रिकायाः सम्पादकः । सरसललितकवितानिर्माणहेतोः कविकोकिलेति विरुदशाली । बहूनां लघुकाव्यानां विविधनिबन्धानां च लेखकः । केन्द्रीयसंस्कृतसमितेः वरिष्ठः सदस्यः ।

सत्यदेव वाशिष्ठः भिषक्केशरी—ग्रा० माहलगहिला, जि० जालन्धर, पंजाब । कृतिः—सत्याग्रहनीतिकाव्यम् ।

राजपण्डित श्रीसोमनाथ शर्मा—ठमेल, नेपाल । कृतिः—आदर्शराघवपुष्पाञ्जलिः (अत्युत्तमाः स्तुतयः), प्रतिसंस्कृता सिद्धान्तकौमुदी च ।

श्री जीवन्यायतीर्थः एम० ए०—भाटपाडा, चौबीस परगना, पश्चिमबंगाल । कृतिः—अनेकानि अत्युत्तमानि नाटकानि प्रहसनानि च ।

श्रीभगवानदत्त "राकेश"—कलकत्ता । कृतिः—कामायनीनामकस्य हिन्दीकाव्यस्य संस्कृतपद्यानुवादः ।

श्रीगोपेन्दुभूषणसांख्यतीर्थः—श्रीधाम नवद्वीप, पश्चिमबंगाल । कृतिः—सम्पूर्णतुलसीकृतरामायणस्य संस्कृतपद्यानुवादमयो महान् ग्रन्थः ।

पं० विष्णुकान्त झा ज्यौतिषाचार्यः—चौहट्टा, बाँकीपुर, पटना । कृतिः—राष्ट्रपतिराजेन्द्रवंशप्रशस्तिः । (कांग्रेसस्यापि विपुलवृत्तान्तसूचिका विविधछन्दोमयी रमणीयतमा कृतिः) ।

सन्निधानं सूर्यनारायण शास्त्री शिरोमणिः—४४ जीरा सिकन्दराबाद, (आन्ध्र)। कृतयः—पूर्णपात्रम्, रामदासम्, विवेकानन्दम्, कचदेवयानीयम्, काव्यत्रिकम्, तेनालिरामलिङ्गकथाः ।

गणेशरामशर्मा—मंगलपुरा, झालावाड, राजस्थान । कृतयः—अनेकानि काव्यानि १३८ लेखाश्च ।

रामकुबेर मालवीयः—वाराणसेयसंस्कृतविश्वविद्यालये साहित्यविभागाध्यक्षः । कृतिः—मालवीयमहाकाव्यम् ।

## तृतीयप्रकरणे अष्टमसन्देशे—

श्री वीरराघवाचार्यः—चामराजेन्द्र संस्कृत महाविद्यालये (बैंग्लोर) विशिष्टाद्वैताऽध्यापकः ।

श्री के० लक्ष्मण शास्त्री आन्ध्रविट्ठलणः—आन्ध्रप्रदेशे संस्कृतशिक्षाविशेषाधिकारी, हैदराबाद । निवासस्थानम्—१६ तुलजागुडा, मोअज्जमजाही मार्केट, हैदराबाद ।

आचार्य श्री त्रिनाथदास शर्मा एम० ए०—उत्कलाभिजनः । वर्तमानसंकेतः—उत्कलभवनम्, दुर्गाकुण्ड, वाराणसी ।

श्री पं० आनन्द झा न्यायाचार्यः—लखनऊ विश्वविद्यालयस्थे संस्कृत महाविद्यालये प्राध्यापकः ।

श्री रामानन्द शास्त्री "आनन्द"—आनन्द औषधालय, सीवान, सारन । (एतेषां मनोहरा पद्यपाठशैली सर्वैरपि श्रोतव्या अनुकरणीया च )

भारतेन्दु हरिश्चन्द्रः (स्वर्गीयः) कृतिः—स्फुटानि कजलीगीतानि ।

श्री कमलेश मिश्रः—(स्वर्गीयः) बासा टाँड जि० गया (विहार) कृतिः—कमलेशविलासः ।

श्री भट्टमथुरानाथ शास्त्री—(पूर्वोक्तः) जयपुर । कृ०—गोविन्दवैभवम् ।

श्री जानकीवल्लभशास्त्रीः—मुजफ्फरपुर (विहार) कृ०—काकली ।

श्री पं० कालीप्रसादशास्त्री—"संस्कृतम्" सम्पादकः अयोध्या । कृतिः—कवितानिकुञ्जः । स्फुटानि गीतानि च ।

श्री रामनाथ पाठकः "प्रणयी"—आरा (विहार)। कृतिः—राष्ट्रवाणी।

श्री पं० बदरीनाथ काशीनाथ शास्त्री—वडौदास्थ-विद्वत्सभाऽध्यक्षः, द्वारकाधीशमन्दिरम्, नरसिंहजी नी पोल, बड़ौदा (गुजरात)। कृतिः—रत्नावली, मालिनी प्रभृतयो नाटिकाः बहुविधानि गीतानि च।

श्री ईशदत्तशास्त्री "श्रीशः"—(स्वर्गीयः) कृतिः—स्फुटानि गीतानि, प्रतापविजयं खण्डकाव्यं च।

श्री रुद्रदेव त्रिपाठी "मालवमयूर" सम्पादकः—मन्दसौर, मध्यप्रदेश। कृतिः—प्रेरणा (गीतानि), डिण्डिमः (हास्यव्यङ्ग्यविनोदपूर्णकविताः)।

श्री काशीनाथ पाण्डेयः "चन्द्रमौलिः"—ग्रा० सोहनपुर, जि० देवरिया (उत्तर प्रदेश)। बीकानेरस्थशार्दूल ब्रह्मचर्याश्रम व्यवस्थापकः। कृतिः—संस्कृत-गीतांजलिः।

आचार्य श्री त्रिनाथदास शर्मा—(पूर्वोक्तः) कृतिः—मुकुन्दविरुदावली, गीतिकाव्यञ्च।

नी० शे० श्री चिदम्बरेश्वरदीक्षितारः—चिदम्बरम्, मद्रासप्रदेश। कृतिः—सङ्गीतकुसुमांजलिः।

श्री काशीकृष्णाचार्यः—गुण्टूरु, आन्ध्रप्रदेशः। विविधशास्त्रीयवैदुष्येन सह गीतवाद्यविशारदोऽपि। विशेषपरिचयः "संस्कृतसाम्राज्यम्" इति नामके अभिनन्दनग्रन्थे द्रष्टव्यः।

(उपर्युक्तानि गीतपुस्तकानि सर्वैरपि संस्कृतज्ञैः द्रष्टव्यानि संग्राह्याणि च)।

## तृतीयप्रकरणे नवमसन्देशे—

रवीन्द्रनाथ ठाकुरः–(स्वर्गीयः) शान्तिनिकेतनम्, बोलपुर, पश्चिम बंगाल। कृतिः—प्राचीन साहित्य (वंगला) (रामायण-मेघदूत-कुमारसम्भव-शकुन्तला-कादम्बरी-प्रभृतिग्रन्थानां हृदयग्राहिणी चर्चा)।

म० म० हरप्रसाद शास्त्री—(स्वर्गीयः) कृतिः—कालिदासीयसाहित्य-विषयका भूयांसो निबन्धाः "वसुन्धरा" प्रभृतिविविधवङ्गीयपत्रपत्रिकासु प्रकाशिताः।

गुरुपद हालदारः—(स्वर्गीयः) कालीघाट, कलकत्ता। कृतिः—व्याकरण दर्शनेर इतिहास (वंगला), वैयाकरणैर्नूनमवलोकनीयो महाग्रन्थः।

## चतुर्थप्रकरणे प्रथमसन्देशे—

म० म० श्री रामावतार शर्मा—(पूर्वोक्तः) कृतिः—परमार्थदर्शनम्, हिन्दीसंस्कृतयोः अनेकानि व्याख्यानानि लेखाश्च। हिन्दीलेखानां संग्रहः

"श्री रामावतार शर्मा-निबन्धावली" नामके ग्रन्थे तथा संस्कृतनिबन्धानां संग्रहः "रामावतार शर्म प्रकीर्ण प्रबन्धाः" इति ग्रन्थे द्रष्टव्यः।

श्री मणिशङ्कर वसन्तराम उपाध्यायः—बडौदा। कृतिः—ईश्वरदर्शनम्-(दार्शनिकविषये वर्तमानकालीनधर्मसमाजव्यवस्थाविषये च निर्भीकतया तदीय-दोषाणामुद्घाटकं क्रान्तिकारि पुस्तकम्)।

श्री मोतीलाल शर्मा—(पूर्वोक्तः) एतेषामद्वितीये विशालतमे च साहित्ये अनेकेषु स्थलेषु क्रान्तिकारिणो नूतना विचारा उपलभ्यन्ते।

पण्डितराज श्री स्वामिभगवदाचार्यः—(पूर्वोक्तः) गुजरातीभाषापुस्तके भक्तिशास्त्रे, संस्कृतभाषायां लिखितेषु वेदोपनिषद्भाष्येषु, वेदान्तदर्शनस्य वैदिकभाष्ये, श्रीजानकीकृपाभाष्यसंक्षिप्तसारे, भगवद्गीताव्याख्यायां, धार्मिकेषु प्रवचनेषु च एतेषां नूतना उद्बोधका विचाराः पठनीयाः।

लक्ष्मण शास्त्री जोशी—(पूर्वोक्तः) पूर्वोक्तग्रन्थद्वये "तथा जडवाद और अनीश्वरवाद" इति पुस्तके च एतेषां कठोराः दृढाश्च परिवर्तनवादिनो विचाराः पठनीयाः।

श्री स्वामिकेवलानन्दसरस्वती—वाई जि० सतारा। प्राज्ञपाठशालायाः संस्थापकः। एषां नाम भ्रमवशात् पुस्तके न चर्चितम्। धर्माचार्योः युगा-नुरूपपरिवर्तनवादिनः पक्षस्य प्रवर्तकाः समर्थकाश्च महापण्डिताः।

## पञ्चमप्रकरणे पञ्चमसन्देशे—

श्री हरिशंकर पाण्डेयः—(स्वर्गीयः) मीठापुर, पटना। कृतिः—आर्षं पाणिनीयं व्याकरणम्।

श्री गोपालशास्त्री दर्शनकेशरी—डी० ५६।३१ गार्डनकालनी, सीगरा वाराणसी। कृतिः—पाणिनीयप्रबोधः (भागद्वयम्) ऋजुपाणिनीयम्, संस्कृत प्रबोधः, पाणिनिनाटकं, नारीजागरणनाटकं च। अष्टाध्यायीपद्धत्या संस्कृत-शिक्षायाः प्रसारे प्रयोगे च समर्पितजीवनः। सम्प्रति उत्तराखण्डे जोशी मठस्थवेदवेदाङ्गसंस्कृतमहाविद्यालये प्रधानाचार्यः।

श्री ब्रह्मदत्त जिज्ञासुः—मोतीझील, वाराणसी। कृतिः—संस्कृत पठन-पाठन की अनुभूत सरलतम विधि। मासिकी पत्रिका "वेदवाणी" (हिन्दी)।

## पञ्चमप्रकरणे सप्तमसन्देशे—

डा० रामशंकर भट्टाचार्यः—अवधगर्वी, वाराणसी। अल्पीयस्येव वयसि व्याकरण-दर्शन-भाषाशास्त्र-पुराणेतिहासादिविविधविषयेषु द्विशताधिकानां गवेषणापूर्णानां निबन्धानां लेखकः प्रवक्ता च। सर्वेऽपि तत्तद्विषयका निबन्धाः ग्रन्थरूपेण शनैः शनैः प्रकाश्यमाना वर्तन्ते।

**पञ्चमप्रकरणे एकादशसन्देशे—**

सेक्सपियर-शेली-मिल्टनप्रभृतयः—सुप्रसिद्धा अंग्रेजीसाहित्यकाराः।

गेटे (Goethe) जर्मनदेशीयो महाकविर्येन अभिज्ञानशाकुन्तलं पठित्वा तस्य महती प्रशस्तिः कृता सुमहांश्च आनन्दोद्गारः प्रकटीकृतः।

आर्नोल्डः—(सर एडविन आर्नोल्ड Sir Edwin Arnold, गीतगोविन्दग्रन्थस्य पद्यानुवादकर्ता अंग्रेजकविः। सुचिरं भारतवासी, भारतस्य प्रशंसकश्च।

म० म० गोपीनाथ कविराज महोदयः—स्वेच्छया वाराणसेय राजकीय-संस्कृत महाविद्यालयस्य अध्यक्षपदं परित्यज्य सारस्वतसाधनायां निरतस्त्यागमूर्तिर्महाविद्वान्।

महाशयः—"महाशय" नाम्ना पण्डितसमाजे प्रसिद्धः श्री रामयशस्त्रिपाठिमहाभागः। धर्मसंघः, वाराणसी। व्याकरण-धर्मशास्त्रयोः विद्वन्मान्यः पण्डितशिरोमणिः। सर्वदा यथालाभसन्तुष्टः अपरिग्रही च। सम्प्रति संन्यासाश्रमावलम्बी।

श्री पं० काशीनाथ द्विवेदी—अस्सी, वाराणसी। अद्भुतप्रतिभाशाली महाकविः। रुक्मिणीहरणमहाकाव्यप्रणेता। लोकप्रपञ्चेभ्यः सर्वथा पराङ्मुखो महामनस्वी च। सर्वदा गृह एव एकस्यां खट्वायां समासीनः काव्यशास्त्रचर्चापरायणो लेखनिरतश्च।

श्री पं० काली प्रसाद शास्त्री—"संस्कृतम्"—सम्पादकः अयोध्या। "अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेत्" इति मन्त्रस्य द्रष्टा प्रसारकश्च।

डा० नलिनी रञ्जन सेन—६१, चौरंगी, कलकत्ता। अ० भा० संस्कृतराष्ट्रभाषासम्मेलनस्य तथा शास्त्रधर्मप्रचारसभायाः संस्थापकः सञ्चालकश्च। संस्कृतभाषायाः, शास्त्राणां, सनातनधर्मस्य च प्रबलः पक्षपाती प्रचारकश्च।

श्री पं० कपिलदेव शर्माः—लोकमान्यनगरम्, छपरा (विहार)। अ० भा० देवभाषापरिषदोऽन्यतमः सञ्चालकः। "आशुबोध" व्याकरणस्य प्रणेता। विशिष्टव्यक्तित्वसम्पन्नः प्रभावशाली वक्ता लेखकश्च।

श्री लक्ष्मीकान्त महादेव चक्रदेवः—२१८, चर्नीरोड, बम्बई। संस्कृतराष्ट्रभाषाकरणसमितेः कार्यवाहः। संस्कृतराष्ट्रभाषात्वस्य प्रबलः पक्षपाती।

श्री पं० किशोरी दास वाजपेयी—कनखल, हरिद्वार। "हिन्दी शब्दानुशासन"—लेखकः। संस्कृतस्य, संस्कृतेः ब्राह्मणत्वस्य च प्रबलः समर्थकः।

श्री पं० रामबालक शास्त्री—रामापुरा, वाराणसी। सन्देशपत्रिकायाः भूतपूर्वः सम्पादकः।

श्री स्वामी ऋषिकुमारः—ऋषिकुञ्जाश्रम, पंचमठा, रीवाँ (मध्यप्रदेश) मध्यप्रदेशे संस्कृतशिक्षाया महत्त्वरक्षायै प्रयत्नशीलः। "मध्यप्रदेश में संस्कृत भाषा और उसके आचार्यों पर घोर संकट" इति पुस्तकस्य लेखकः।

सोमयाजी—(के० कृष्ण सोमयाजी) मन्त्री, संस्कृत सेवक समाज, गुन्टूर, आन्ध्र। A plea for Sanskrit, Sanskrit or India Bi-Linqual, Sanskrit and the Brahman, प्रभृति पुस्तिकानां लेखकः तथा "भाषा" संस्कृतपत्रिकायाः प्रकाशकः सम्पादकश्च।

श्री विद्याधर शास्त्री—एम०ए०,नागरी भण्डार, बीकानेर (राजस्थान) राजस्थान संस्कृत साहित्य सम्मेलनस्य कार्यवाहकः। अ० भा० संस्कृत साहित्य-सम्मेलनस्य भूतपूर्वो मन्त्री। "संस्कृत संस्कृति का विश्वसन्देश" इति पुस्तकस्य लेखकः।

श्री पूर्ण प्रसाद ब्राह्मणः—काठमांडू, नेपाल। "शिक्षा आयोग के रिपोर्टरों से" इति पुस्तकस्य लेखकः। नेपाले नियुक्तस्य शिक्षायोगस्य सदस्यैः संस्कृतस्य उपरि कृतानामाक्षेपाणां निराकरणाय लिखितमिदं पुस्तकम्।

श्री प्रकाशचन्द्र गौड़ एम०ए०व्याकरणाचार्यः—उत्तरप्रदेशीय संस्कृत-पाठशालानां प्रधाननिरीक्षकः, इलाहाबाद। प्रभावशाली वक्ता, प्रबलः संस्कृतपक्षपोषकः सरसललितकवितानिर्माणकुशलश्च। सर्वविधैः संस्कृत-शिक्षाविषयकैः प्रश्नैः समाधानैश्च समन्वितस्य "संस्कृत क्यों" इति पुस्तकस्य लेखकः।

श्रीधर भास्कर वर्णेकरः—संस्कृत प्रचारिणी सभा, नागपुर। "संस्कृत-भवितव्यम्" पत्रिकायाः सम्पादकः। महाराष्ट्रप्रदेशे संस्कृतभाषाया महान् प्रचारकः, प्रभावशाली वक्ता, बहूनां गद्यपद्यात्मकपुस्तकानां लेखकश्च।

## पञ्चमप्रकरणे द्वादशसन्देशे

म० म० रामावतार शर्मा—(पूर्वोक्तः)

म० म० सुधाकर द्विवेदी—(स्वर्गीयः) खजुरी, वाराणसी। वाराणसेय-राजकीयसंस्कृतमहाविद्यालयस्य ज्यौतिषविभागाध्यक्षः। ज्यौतिषशास्त्रस्य गणितस्य च उद्भटो विद्वान्। सूर्यसिद्धान्तादिग्रन्थानामभिनवव्याख्याकारः। पञ्चाशत्तोऽप्यधिकानां ग्रन्थानां लेखकः सम्पादकश्च। अद्भुतप्रतिभाशाली विद्वान्।

म० म० आचार्य गणनाथ सेनः—कलकत्ता। अष्टाङ्ग महाविद्यालयस्य संस्थापकः। "प्रत्यक्षशारीरम्" ग्रन्थस्य लेखकः। आयुर्वेदशास्त्रस्य समुद्धारकः समर्थकः प्रचारकश्च।

म० म० गोपीनाथ कविराजः—वाराणसी । वाराणसेय राजकीय संस्कृत-महाविद्यालयस्य भूतपूर्वः अध्यक्षः । तन्त्रशास्त्रस्य पारङ्गमो विद्वान् । बहूनां महनीयग्रन्थानां लेखकः साधकश्च ।

श्रीकृष्णपन्तः साहित्याचार्यः—गोयनका महाविद्यालयान्तर्गतस्य विशालतमस्य श्रीविश्वनाथपुस्तकालयस्य प्रधानः पुस्तकालयाध्यक्षः । पाठकानां कृते सौविध्यप्रदाने साहाय्यकरणे च वाराणस्यां विश्रुतकीर्तिः ।

उपकुलपतिः—एतत् पुस्तकप्रकाशनकाले वाराणसेयसंस्कृतविश्वविद्यालयस्य उपकुलपतिः माननीयः श्री पण्डितसुरतिनारायणमणित्रिपाठिमहोदयः । देवरिया जनपदस्य 'वरपार' नामके ग्रामे, सुप्रतिष्ठिते सुसम्पन्ने च परिवारे १९०३ ई० संवत्सरे जन्म । शिक्षा एम. ए. (संस्कृत), एल. एल. बी. पर्यन्तम् । आरम्भे वाक्कीलरूपेण कार्यक्षेत्रे प्रवेशः । अनन्तरं डिप्टी कलक्टर, कलक्टर, डिप्टी कमिश्नर प्रभृतिपदेषु अवस्थितिः । तत्पश्चात् लोकसेवायोगस्य शासनविभागे (पब्लिक सर्विस कमीशन एडमिनिस्ट्रेटिव सर्विस) सदस्यरूपेण स्थितिः । तदनु वृटिश इन्डिया कार्पोरेशन (कानपुर) संस्थाने प्रबन्धनिदेशकपदस्य (मैनेजिंग डाइरेक्टर) कार्यभारग्रहणम् । अन्ते १९६२ ई० वत्सरे वाराणसेय संस्कृत-विश्वविद्यालयस्य उपकुलपतिपदे प्रतिष्ठितिः ।

आरम्भत एव समाजसेवानिष्ठः शिक्षानुरागी च । गोरखपुर विश्वविद्यालयस्य संस्थापकः, सम्प्रति कोशाध्यक्षश्च । बह्वीनां सुप्रतिष्ठितसंस्थानामध्यक्षः सदस्यः सहायकश्च । सार्वभौमसंस्कृतप्रचारकार्यालयस्य अध्यक्षः । संस्कृतसंस्कृत्योर्विशिष्टाभिमानी, वार्द्धक्येऽपि अप्रतिमोत्साहसम्पन्नः, प्रतिभावान्, कार्यकुशलः, संस्कृतविश्वविद्यालयस्य सुव्यवस्थायामुन्नयने च सर्वात्मना संलग्नः ।

मधूसूदन ओझा—विद्यावाचस्पतिः, समीक्षाचक्रवर्ती, महामहोपदेशकः जयपुरराजपण्डितः । वैदिकसाहित्यस्य अद्वितीयो विद्वान् । वैदिकविज्ञानरहस्योद्घाटकानां परःशतानामद्भुतग्रन्थानां लेखकः ।

## पंचमप्रकरणे त्रयोदशसंदेशे

श्री केशवचन्द्र मिश्रः एम. ए., साहित्यरत्न, बी. टी.—मदनमोहनमालवीयमहाविद्यालयस्य (भाटपाररानी, देवरिया) प्रधानाचार्यः, महामना संस्कृत-विद्यालयस्य सञ्चालकः, सार्वभौमसंस्कृतप्रचारकार्यालस्य प्रधानमन्त्री च ।

श्री पं. परशुरामतिवारी, एडवोकेट देवरिया । संस्कृतभाषायाः भारतीय-संस्कृतेश्च महान् पोषकः, समर्थकः, संस्कृतविदुषामाश्रयदाता च । सार्वभौमसंस्कृत प्रचारकार्यालयस्य विशिष्ट सदस्यः ।

लक्ष्मीदेवी ऐय्यर, आचार्या काल्पाती जि. पालघाट (केरल) । सम्प्रति

वाराणस्यां अवधगर्वी स्थाननिवासिनी, वृद्धावस्थायामपि पुराणाचार्यपरीक्षामुत्तीर्य विद्यावारिधिपदवीप्राप्तये निबन्धलेखनपरायणा।

के. लक्ष्मणशास्त्रिणां पत्नी १६ तुलजागुडा, मोअज्जमजाही मार्केट, हैदराबाद। आन्ध्रप्रदेशे संस्कृतशिक्षाया विशेषाधिकारिणां श्री के. लक्ष्मणशास्त्रिणां धर्मपत्नी अन्नपूर्णानाम्नी संस्कृतज्ञा, सदा संस्कृतभाषणे प्रयत्नशीला च। एषा मेघदूत-शकुन्तलादिग्रन्थानां सम्यग्रूपेण पठनाय आकुलापि नाद्यावधि शास्त्रिमहोदयैः पाठिता।

परमानन्द पण्डित एम. ए. वसन्तबाग, श्रीनगर, कश्मीर। कश्मीरराज्यस्य निवृत्तः महागणनाधिकारी (Retired Accauntant General) श्री रूपा देवी शारदापीठस्य संस्थापकः सञ्चालकश्च। सप्ततिवर्षवयस्को वृद्धोऽपि कश्मीरे पुनः संस्कृतशिक्षायाः व्यापकप्रचाराय व्याकुलः, समर्पितसकलजीवनधनश्च स्पृहणीयचरितो महापुरुषः।

- कपिलदेवशर्मा लोकमान्यनगरम् छपरा ( बिहार )। एतेषां गृहे सर्वोऽपि परिवारः, बालकाः, बालिकाः, बालको भृत्यश्चेति सर्वेऽपि सर्वदा संस्कृतमेव भाषन्ते। बालिकायाः बालभृत्यस्यस्य च संस्कृतसम्भाषणं विस्मयकरम्। तथैव एतन्नगरनिवासिनः श्री पं. भरतमिश्रमहोदयस्यापि स्थितिः।

गोपालशास्त्री दर्शनकेशरी ( पूर्वोक्तः ) अष्टाध्यायीपद्धत्या संस्कृतशिक्षायाः प्रसारकः। उत्तराखण्डे जोशीमठस्थ संस्कृत महाविद्यालयस्य प्रधानाचार्यः। एतेषां द्वौ पुत्रौ, द्वितीया 'संस्कृता' नाम्नी पुत्रवधूश्च अष्टाध्याय्यां कृतश्रमा। एषां सर्वेषामपि सदा संस्कृतभाषणस्य समीचीनोऽभ्यासः।

डा० सीताराम शास्त्री एम. ए., पी एच. डी. व्याकरणाचार्यः, साहित्याचार्यः, शिक्षणशास्त्राचार्यः, राजशास्त्राचार्यश्च, हिन्दूविश्वविद्यालये व्याकरणविभागाध्यक्षः। एतस्य विद्वद्वरस्य ललिताशास्त्री ( १३ वर्षीया), बालशास्त्री ( १० वर्षीयः ) सरलाशास्त्री ( ६ वर्षीया ) भालशास्त्री ( ४ वर्षीयः ) एते सर्वेऽपि बालका बालिकाश्च संस्कृते वार्तालापं कुर्वन्ति। द्विवर्षीयो विशालशास्त्री शिशुरपि संस्कृतमवगच्छति तथा संकेतेन उत्तरं च ददाति। निवासस्थानम्—श्री राजस्थान संस्कृत कालेज, मीरघाट, वाराणसी—१।

( एतेषां सर्वेषां गृहे गत्वा पण्डितैः स्वयमेव सर्वमवलोकनीयम् )

श्रीदेशमुखः ( श्री चिन्तामणि द्वारकानाथ देशमुखः ) केन्द्रस्य भूतपूर्वः वित्तमन्त्री। विश्वविद्यालयीयसहायतायोगस्य अध्यक्षः। सम्प्रति दिल्ली विश्वविद्यालयस्य उपकुलपतिः। अ. भा. संस्कृत साहित्यसम्मेलनस्य दिल्ली—अधिवेशने अध्यक्षः। संस्कृतस्य आशुकविः, संस्कृतभाषया भाषणे, सम्भाषणे, लेखे च सुतरां

कुशलः। विद्यमाने राजनायकवृन्दे सर्वातिशायी संस्कृतमनीषी, शान्तिशील-सौजन्यमूर्तिश्च।

श्रीसुरेन्द्रनाथतिवारी एम. ए., साहित्यशास्त्री—देवरियाजनपदनिवासी। केन्द्रीय रेलवे बोर्ड वित्तविभागे उपनिदेशकः। संस्कृतया गिरा सम्भाषणे संस्कृतयैव गिरा पद्यमये पत्रलेखने च स्वाभाविकी प्रवृत्तिः साधीयसी कुशलता च।

महामहोपाध्याय श्री दत्तो वामन पोतदारमहोदयः-४६८ शनिवार पेठ, पूना। पूनाविश्वविद्यालयस्य उपकुलपतिः, केन्द्रीयसंस्कृतसमितेरध्यक्षः, भाषा-साहित्य-संस्कृति-शिक्षण-पुरातत्त्व-प्रभृतिविषयेषु बहूनां ग्रन्थानां लेखकः, वार्द्धक्येऽपि युवजनोचितोत्साहसम्पन्नो भारतप्रसिद्धः कर्मवीरो विद्वान् व्याख्याता च।

जगन्नाथोपाध्यायः वेदान्ताचार्यः बौद्धदर्शनाचार्यः वाराणसेयसंस्कृतविश्वविद्यालये बौद्धविभागाध्यक्षः, अन्ताराष्ट्रीयविभागस्य तथा एतद्विभागेऽध्ययनं कुर्वतां विदेशिनां छात्राणां च परमसहायकः प्रोत्साहकः कष्टनिवारकश्च।

फडकेशास्त्री (श्री पं० अनन्त शास्त्री फडके) वाराणसेय संस्कृत विश्वविद्यालयस्य भूतपूर्वः पुराणविभागप्राध्यापकः, बहूनां निबन्धानां लेखकः सम्पादकश्च, संस्कृतविश्वपरिषदो भूतपूर्वः सम्मानितप्राध्यापकः। पत्रव्यवहारद्वारा बहूनां विभिन्नदेशवासिनां विदुषां संस्कृतशिक्षकः। प्रौढसंस्कृतशिक्षायाः विशेषज्ञः।

सूचना—अस्मिन् परिचयप्रसङ्गे विशेषरूपेण प्रसिद्धानां विदुषां नेतॄणां च परिचयो ग्रन्थविस्तरभयात् न प्रदत्त इति तैः क्षमा विधेया।

# परिशिष्टम्—ख

## पुस्तके चर्चितानां संस्थानां तथा स्थानानां परिचयः

### द्वितीयप्रकरणे प्रथमसन्देशे

अ० भा० संस्कृत साहित्य सम्मेलनम्—१६७० तमे वैक्रमसंवत्सरे स्वर्गीय श्रीमदनमोहनमालवीयमहोदयैः संस्थापितम्। वर्तमानसङ्केतः—१७२ डी कमलानगर, दिल्ली, ६।

### द्वितीयप्रकरणे चतुर्थसन्देशे

विश्व संस्कृत परिषद्—स्वर्गीय श्री सरदार वल्लभ भाई पटेल महोदयस्य सम्मत्या श्री कन्हैयालाल माणिकलाल मुंशी महोदयैः श्री सोमनाथ ज्योतिर्लिङ्ग-प्रतिष्ठा महोत्सवावसरे ११-५-१९५१ दिनांके संस्थापिता। वर्तमान सङ्केतः—भारतीय विद्याभवन, चौपाटी, मुम्बई।

## तृतीयप्रकरणे अष्टमसन्देशे

मदुरा—दक्षिणभारतस्य सुप्रसिद्धं तीर्थस्थानं यत्र भगवती मीनाक्षी विराजते। अत्रैव एका बालिकानां संस्कृतपाठशाला प्रचलति यत्र अधीयमानां बालिका अत्यन्तमधुरेण स्वरेण गद्यानि, पद्यानि, दण्डकानि च गायन्ति।

संस्कृतच्छात्रनिलयम्, वैंग्लोर—मैसूर राज्यस्य प्रसिद्धे वैंग्लोर नगरे विद्यमानायाः श्री चामराजेन्द्रसंस्कृतकलाशालायाः छात्रावासस्य नाम संस्कृत-छात्रनिलयमिति।

चिदम्बरम्—दक्षिणभारतस्य प्रसिद्धं तीर्थस्थानं यत्रत्ये मन्दिरे भगवतो नटराजस्य मूर्तिर्विराजते।

शिमला पाठशाला—सुप्रसिद्धे शिमलानगरे प्रचलन्ती ब्राह्मणसभासंस्कृत-महाविद्यालयनाम्नी प्रतिष्ठिता शिक्षासंस्था।

## तृतीयप्रकरणे पञ्चमसन्देशे

धर्मनिर्णयमण्डलम्—अस्याः संस्थायाः "तत्त्वनिष्ठ परिवर्तनवादी परिषद्" इति नामान्तरं वर्तते येनाऽस्याः सिद्धान्तस्य परिज्ञानं भवति। १९३४तमे ईशवीये सम्वत्सरे महाराष्ट्रस्य लोणावले नामके स्थाने समयोपयोगिधर्माचारप्रवर्तनद्वारा क्षीयमाणस्य हिन्दुसमाजस्य सङ्घटनार्थं संरक्षणार्थं च महाराष्ट्रीयैः परिवर्तनवादिभिर्विद्वत्प्रवरैः संस्थापितमिदं मण्डलम्। सम्प्रति एतस्य प्रधानकार्यवाहाः श्री रघुनाथ शास्त्री कोकजे महोदया वर्तन्ते। स्थानं पो० लोणावले जि० पूना(महाराष्ट्र) वर्तते। एतन्मण्डलस्य प्रमुखैः संस्थापकैः मराठीभाषायां बहूनि पुस्तकान्यपि प्रकाशितानि सन्ति। उपर्युक्तसङ्केतेन तत् सर्वं ज्ञातुं लब्धुं च शक्यते। कोकजे-महोदयैरेकं नूतनं पञ्चाङ्गमपि प्रकाश्यते।

ब्राह्मणसभा, मुम्बई—२२ जनवरी १८८८ दिनाङ्के मुम्बईनगरस्थितैः महाराष्ट्रीयैः स्वजातिधर्माभिमानिभिर्ब्राह्मणप्रवरैः स्थापिता। वर्तमान सङ्केतः—१९०, चर्नी रोड, मुम्बई ४।

वटपत्तनम्—गुजरात प्रदेशस्य 'वड़ौदा' नामकं भारतप्रसिद्धं विद्याकेन्द्रभूतं नगरम्। अत्रत्या विद्वांसः श्री बदरीनाथ काशीनाथ शास्त्रि महोदयाः, श्री मणिशङ्कर वसन्तराम उपाध्यायाः तथा श्री जयनारायण रामकृष्ण पाठक प्रभृतयश्च न केवलं गीतिनिर्मातारः प्रत्युत गायका अपि। एतेषां प्रयासादस्मिन् नगरे भूयांसो बालका बालिकाश्च संस्कृतगीतिकुशलाः सञ्जाताः सन्ति।

## तृतीयप्रकरणे दशमसन्देशे

कार्यालयः—वाराणसेयः सार्वभौमसंस्कृतप्रचारकार्यालयः।

पञ्चमप्रकरणे एकादशसन्देशे

नवद्वीपादि—पश्चिमवङ्गस्थितस्य नदियामण्डलस्य 'श्रीधाम नवद्वीप'नाम्ना भारतप्रसिद्धं स्थानम्। इदं खलु महाप्रभोश्चैतन्यस्य जन्मभूमिः न्यायशास्त्रस्य सुप्रसिद्धं विद्यापीठञ्च। 'नवद्वीपमहिमा' 'नदियाकाहिनी' इति बंगभाषया लिखिते पुस्तकद्वये एतत्स्थानस्य महत्त्वं ज्ञातव्यम्।

पञ्चमप्रकरणे द्वादशसन्देशे

गुरुकुलम्—गुरुकुल कांगड़ी विश्वविद्यालय : हरिद्वारम्

शान्तिनिकेतनम्—शान्तिनिकेतनस्थभारतीविश्वविद्यालयः बोलपुर (पं०बं)

दारुल उलूम—शाहजहाँपुरमण्डले देवबन्दनगरस्थितं सुप्रसिद्धम् अरबी भाषाया विद्यापीठम्।

# परिशिष्टम्—ग

## साम्प्रतमुपलभ्यमानाः संस्कृतपत्रपत्रिकाः

| | वार्षिकं मूल्यम् |
|---|---|
| **दैनिकी** | |
| संस्कृतिः—श्री शारदा मुद्रणालय २८१, बुधवार पेठ, पूना | १५.०० |
| **साप्ताहिकी** | |
| संस्कृतम्—संस्कृत कार्यालयः, अयोध्या | ८.०० |
| संस्कृतभवितव्यम्—संस्कृतप्रचारिणी सभा, नागपुर | ५.०० |
| **पाक्षिकी** | |
| भारतवाणी—संस्कृतसभा, पूना, २ | ५.०० |
| संस्कृतसाकेत—अयोध्या | ६.०० |
| **मासिकी** | |
| उद्यानपत्रिका—तिरुपति ( आन्ध्र ) | ३.०० |
| गुरुकुलपत्रिका—गुरुकुल कांगड़ी विश्वविद्यालयः, हरिद्वारम् | ४.०० |
| जयतु संस्कृतम्—१०।५५८ भोटाहिटी, काठमाण्डौ, नेपालः | ६.०० |
| देववाणी—अवस्थीनिवासः मुंगेर ( विहार ) | ५.०० |
| दिव्यज्योतिः—आनन्द लॉज, जाखू, शिमला—१ | ६.०० |
| प्रणवपरिजातः—श्री सीताराम वैदिक महाविद्यालयः ७।३, पी० डब्ल्यू० डी० रोड, कलकत्ता—३५ | २.०० |

बालसंस्कृतम्—आगरा रोड, घाट कोपर, बम्बई ७७ ६.००

विज्ञानज्योतिः—खुरजा, जि० बुलन्दशहर ( ज्यौतिषप्रधानं हिन्दी समन्वितं च ) ८.००

भारती—भारती-भवन, गोपालजी का रास्ता, जयपुर ( राजस्थान ) ५.००

मालवमयूरः—मन्दसौर ( मध्यप्रदेश ) हास्यविनोदप्रधानं पत्रम् ४.००

वैदिकमनोहरा—काञ्जीवरम् , मद्रास स्टेट ( वैष्णवसाहित्यप्रधाना ) ५.००

शारदा—द्वारा श्री म. म. दत्तोवामन पोतदार, लोक कल्याण ७७ शनिवार पेठ पूना २ ५.००

संस्कृतसाहित्यपरिषत्पत्रिका— १६८।१ राजा धनेन्द्र स्ट्रीट, श्यामबाजार, कलकत्ता ६.००

संस्कृतरत्नाकरः—१७२ डी० कमलानगर, देहली–६ ५.००

संस्कृतसञ्जीवनम्—विहारसंस्कृतसञ्जीवनसमाजः, वारीपथ, पटना ४ ६.००

सूर्योदयः—श्रीभारतधर्म महामण्डल, जगतगंज, वाराणसी कैण्ट ५.००

त्रैमासिकी

गैर्वाणी—संस्कृतभाषा प्रचारिणी सभा, चित्त रु ( आन्ध्रप्रदेश ) १.५०

त्रैमासिक संस्कृतम् , स्वाध्यायमंडल, पारडी जि. सूरत

विश्व-संस्कृतम्—विश्वेश्वरानन्द वैदिक शोधसंस्थान, होशियारपुर ८.००

सारस्वती सुषमा—अनुसंधान विभाग, संस्कृत विश्वविद्यालय, वाराणसी कैन्ट ७.००

सागरिका—संस्कृत परिषद् , सागर विश्वविद्यालय, सागर ६.००

षाण्मासिकी

संस्कृतप्रतिभा—साहित्य अकादेमी, नई दिल्ली ४.००

अनियतकालिकी

संस्कृतसौरभम्—संस्कृत विद्वत्सभा, द्वारकाधीशमन्दिरम् , नरसिंहजी नी पोल, बड़ौदा । इयं पत्रिकाऽपि अचिरादेव मासिकी भविष्यतीति तत्सम्पादकैर्निवेदितम् ।

## परिशिष्टम्—घ

### संस्कृतविषयप्रधानाः शोधपत्रिकाः

Annals of the Bhandarkar oriental Reasearch Institute, Poona.

Adyar library Bulletin (ब्रह्मविद्या) Adyar, Madras.

Annals of oriental reaserch, Madras university.
Bharatiya Vidva. Bharatiy vidya Bhavan, Bombay.
Journal of Ganga nath jha Reaserch Institute, Allahabad.
Journal of the shri venkateswar oriental Institute, Tirupati.
Journal of the Tanjore Saraswati Mahal library, Tanjore.
Our Heritage, Sanskrit Collage, Calcutta.
Poona orintalist, oriental Book Agency. Poona.
Vac ( वाक् ) Deccan Collage Reaserch Institute, Poona,
Journal of the oriental Institute. Baroda.
Prachyavani. Calcutta.

## परिशिष्टम्—ङ

### भारतीयमहत्ताया विषये अध्ययनीयाः केचन महत्त्वपूर्णग्रन्थाः

| | |
|---|---|
| भारतशतकम्–श्री महादेवशास्त्री कवितार्किकचक्रवर्ती | |
| भारतस्य सांस्कृतिकनिधिः—डा० रामजी उपाध्याय | १२.०० |
| भारतीय संस्कृति, महाकाव्यों के आलोक में—डा० देवराज | ४.०० |
| भारतीय संस्कृति के आधार—श्री अरविन्द | १०.०० |
| भारत भारती—श्री मैथिलीशरण गुप्त | |
| भारतीय गौरव--वासुदेव उपाध्याय | ३.०० |
| प्राचीन भारत में रसायन का विकास—डा० सत्यप्रकाश | १४.०० |
| नवीन दृष्टि में प्रवीण भारत—स्वामी दयानन्द | १.०० |
| प्राचीन भारत की सांग्रामिकता—रामदीन पाण्डेय | ६.०० |
| हिन्दू भारत का उत्कर्ष—चिंतामणि विनायक वैद्य | ३.७५ |
| भारतीय ज्योतिष—श्री शंकर बालकृष्ण दीक्षित | ८.०० |

(अन्ये बहवो ग्रन्थाः पूर्वमेव तत्तत्प्रसङ्गे चर्चिताः सन्ति। ते जिज्ञासुभिः तत्रैव द्रष्टव्याः)

# शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | १३ | विकटाः सन्धीः | विकटान् सन्धीन् |
| १६ | ६ | कश्मीरे षु | कश्मीरेषु |
| ४१ | २ | तात्विक | तात्त्विक |
| ४६ | २६ | गहे | गृहे |
| ४८ | ६ | तषाञ्चापि | तेषाञ्चापि |
| ५१ | १४ | यमाच्छ्रेष्ठो | यमाच्छ्रेष्ठो |
| ६१ | २२ | रक्षति | रक्षित |
| ७० | १ | आसाञ्च | एषाञ्च |
| ७० | १७ | श्रतानि | श्रुतानि |
| ७२ | १५ | कृतीं | कृती |
| ७५ | ८ | लिखितुं | लेखितुं |
| ,, | ,, | हिन्द्यां | हिन्द्या |
| ७७ | १० | सामार्थ्यं | सामर्थ्यं |
| ८० | २७ | गालिभिश्चपि | गालिभिश्चापि |
| ८३ | १ | तस्मादध्यापक | तस्मादध्यापकै |
| १०६ | १५ | भिथः | मिथः |
| १११ | १६ | तथा | तदा |
| ११५ | ७ | सुनिमलित | सुनिमीलित |
| १२९ | ५ | एवां | एषां |
| १३० | १२ | यनि | यदि |
| | | षुधेन | बुधेन |
| | | विपुलादशे | विपुलादरो |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३५ | १३ | दवभाषा | देवभाषा |
| १३८ | २१ | दृढं | दृढम् |
| १३९ | १२ | ब्राह्मणां: | ब्राह्मणैः |
| १४२ | ७ | संस्कृतेभरितीयाया | संस्कृतेर्भारतीयाया |
| १४३ | २० | पर | परं |
| १४६ | ७ | गुणैर्नणां | गुणैर्नृणां |
| ,, | ८ | यर्विना | यैर्विना |
| १४६ | १७ | पूजिता | पूजिताः |
| १५२ | १ | गोयन्दका | गोयनका |
| १५६ | ६ | जानीतु | जानीयु |
| १६० | ४ | वश्य | वश्यं |
| ,, | १८ | कारकम् | कारकः |
| १६७ | १६ | रुदन्त्यपि | रुदत्यपि |
| १६९ | १ | श्लाघ्योदेशमुखो | श्लाघ्यो देशमुखो |
| १७० | १४ | प्रपत्यते | प्रयत्पते |
| ,, | १६ | दूरदशतः | दूरदेशतः |
| १७२ | १८ | मेत | मेतद् |
| १७४ | ३१ | महाराज | महाराजः |
| ,, | ३२ | पृष्ठेषु | ८५० पृष्ठेषु |
| १७५ | १२ | लिट्० डी० | डी० लिट् |

## पुस्तकप्रकाशने आर्थिकसाहाय्यकारिणां चिरस्मरणीया शुभनामावलिः

श्री पं० जगन्नाथोपाध्यायः—वेदान्ताचार्यः बौद्धदर्शनाचार्यः बौद्ध-
विभागाध्यक्षः, संस्कृतविश्वविद्यालयः, वाराणसी १००.००

श्री पं० गोपालशास्त्री दर्शनकेशरी—प्रधानाचार्यः-श्रीबदरीनाथ
वेदवेदाङ्गसंस्कृतमहाविद्यालयः जोशीमठ, उत्तराखण्ड १०१.००

पण्डितराज श्री स्वामि भगवदाचार्यः—राजनगर सोसाइटी,
अहमदाबाद ७ १२५.००

श्रीमती अध्यापिका चन्दनदेवी—कश्मीर सोसाइटी, अहमदाबाद७ १००.००

डी. ए. वी. बहूद्देशीय विद्यालयः—सीवान, सारन १००.००

श्री पं० बदरीनाथ काशीनाथ शास्त्री—बडौदास्थ - विद्वत्सभाध्यक्षः,
सरस्वतीसौरभम्-सम्पादकः, द्वारकाधीशमन्दिरम्, नृसिंहवीथी, बडौदा ।५०-००

श्री के० लक्ष्मण शास्त्री—संस्कृतशिक्षाविशेषाधिकारी, आन्ध्रप्रदेशः,
१६ तुलजागुडा, मोअज्जमजाही मार्केट, हैदराबाद । २५-००

हैदराबाद संस्कृतसाहित्यपरिषद् – हैदराबाद । २५-००

श्री आचार्य त्रिनाथदास शर्मा एम. ए.—उत्कलभवनम्, दुर्गाकुण्ड,
वाराणसी २५.००

श्री पं० ताराशंकर मिश्र वैद्यः—प्रधानाचार्यः-अर्जुन आयुर्वेद-
महाविद्यालयः, अध्यक्षः-संस्कृत विश्वपरिषद् शाखा, वाराणसी २५.००

श्री पं० रामनाथ शर्मा—ज्यौतिष कार्यालयः, हौजकटोरा, वाराणसी २५.००

श्री डा० सीताराम शास्त्री—व्याकरणविभागाध्यक्षः, हिन्दू विश्वविद्या-
लयः, वाराणसी २५.००

Bhikkhu Aggarata TOR-ANN Shastry—c/o Buddhist Association 'Sangha Raja Temple' Unnalom Temple
Phuom Penh, Cambodia 25.00

Rev. Rewatadhamma Shastry—c/o Buddha Sasana
Council, Kaba-Aye Rangoon, Burma 25.00

संस्कृतपरिषद्, श्रीमदनमोहन मालवीय डिग्री कालेज, भाटपार रानी,
देवरिया २१.००

श्री पं० विश्वनाथ मिश्रः—प्रधानाचार्यः-शार्दूल ब्रह्मचर्याश्रम,
बीकानेर २१.००

श्री डा० कपिलदेवः—व्याख्याता कुरुक्षेत्रविश्वविद्यालयः, कुरुक्षेत्र २१.००

भिक्षु मंगलहृदयः—( मंगोलिया ) लेक्चरर, गोरखपुर विश्वविद्यालय, गोरखपुर ११.००

श्रीमती लक्ष्मीदेवी ऐय्यर—आचार्या अवधगर्वी, वाराणसी ११.००

श्री महामना संस्कृत विद्यालयः भाटपार रानी, देवरिया ११.००

श्री पं० हरिपाल द्विवेदी शास्त्री, साहित्यरत्न, प्रधानाचार्यः श्री विद्याधर्म-प्रचारिणी संस्कृतपाठशाला ग्रा. पो. भवानीछापर, देवरिया ११.००

छात्रपरिषद्—श्री जयभारत साधु महाविद्यालयः, हरिद्वार ११.००

श्री पं० कपिलदेवत्रिपाठी जटिलः—पुराणाध्यापकः संस्कृतविश्वविद्यालयः, वाराणसी ।११—००

श्री डा० राम अवध पाण्डेयः—अन्ताराष्ट्रीयविभागेऽध्यापकः ,, ,, ११—००

श्री पं० रघुराज मिश्रः—वैदिकविज्ञानाध्यापकः ,, ,, ११—००

श्री पं० विन्ध्येश्वरी प्रसाद त्रिपाठी यजुर्वेदाध्यापकः ,, ११.००

श्री पं० वामनदेवजी शर्मा—ऋग्वेदाध्यापकः ,, ११.००

श्री पं० कृष्णचन्द्र द्विवेदी—ज्यौतिषाध्यापकः ,, ११.००

श्री पं० कालिका प्रसाद शुक्लः—अनुसन्धानविभागः ,, ,, ११—००

श्री डा० रामशंकर भट्टाचार्यः— ,, ,, ,, ११—००

श्री पं० व्रजवल्लभ द्विवेदी— ,, ,, ,, ११—००

श्री पं० जनार्दनपाण्डेयः शास्त्री—एम० ए० सरस्वतीभवनम् ,, ,, ११—००

श्री पं० शेषराज शर्मा—धर्मशास्त्राचार्यः हिन्दूविश्वविद्यालयःवाराणसी ५.००

गेशे ङवङ् ञिमा—मंगोलिया ५.००

लामा पा० वो० रिमपो छे—तिब्बत ५.००

लामा थुब् तन् छोग् डुब्—तिब्बत ५.००

T. Komori.– 24 Sotonihi-cha, Tsuchiura, Ibaragi—Ken, JAPAN 5.00

श्री पं० कुवेरनाथ पाठकः—वेदाचार्यः रिसर्च स्कालर, अनुसन्धानभवन, संस्कृत विश्वविद्यालयः, वाराणसी ५.००

श्री बजरंगदेव द्विवेदी—आचार्य ३ वर्षः संस्कृत विश्वविद्यालयःवाराणसी ५.००

श्री नारायणदत्त शर्मा— ,, ,, ,, ५.००

श्री नरेन्द्र देवः— ,, ,, ,, ५.००

श्री रामचन्द्र पाण्डेयः— २ वर्षः ,, ,, ५.००

श्री आद्याप्रसाद शुक्लः— छात्रः ,, ,, ५.००

